श्रीसर्वज्ञाय नमः

सकलभट्टारकपुरन्दरसंविज्ञचूडामणिश्रीमदकब्बरसाहिमदत्तयुगप्रधानपदविभूषिताचार्यप्रवरश्रीमज्जिनचन्द्रसूरीश्वरसाम्रा... ...नाचार्य-श्रीमत्प्रमोदमाणिक्यवाचंयमविनेयावतंसश्रीमदकब्बरसाहिसंसलब्धजयमहोपाध्यायश्रीजयसोमगणिवरविरचिता स्वोपज्ञवृत्तिविभूषिता

# पौषधषट्त्रिंशिका.

जैनचन्द्रं वचः स्मृत्वा, ध्यात्वा श्रीश्रुतदेवतां। पौषधस्य षट्त्रिंशिकां, विवृणोमि समा[illegible] ॥१॥

इह हि सकलविबुधकुलानुकूलं विघ्नोपशममूलं स्वसमयसमुचितमभीष्टविशिष्टदेवतानमस्काररूपं प्रारिप्सितप्र[illegible]ण्यव[illegible]मये शास्त्रसंसिद्धिसाधनं समग्रसमयानुसारितया सर्वशिष्यप्रशिष्यशिक्षायै विशिष्टपलं वाचिकं मंगलं प्रेक्षावत्प्रवृत्त्यङ्गमभिधेयादि[illegible]द्वयेनाह-

पसरियनाणपयासं, पासं पणमित्तु सव्वगुणवासं। अइसयरासिसमिद्धं, वंछियदाणेण सुपसिद्धं ॥१॥

सुरमहिअसुअपओणिहि-मज्झगयं लहिअ सुद्धदिट्ठीए। पोसहवयपरमऽत्थं, दंसेमि जणाण सुहियऽत्थं ॥२॥

व्याख्या—अहं पौषधव्रतपरमार्थं 'दर्शयामि' प्रकटीकरोमीति मूलान्वयः, तत्र पोषं—पुष्टिं प्रक्रमाद्धर्मस्य धत्ते धातूनामनेकार्थत्वा-त्करोतीति पौषधोऽष्टमीचतुर्दशीपूर्णिमाऽमावास्याऽऽदिरूपपर्वदिनानुष्ठेयो व्रतविशेषः, पौषध एव व्रतं पौषधव्रतं, तस्य परमार्थस्तत्कि

रूपं ? कदा ? कीदृशं ? कः ? कथं ? विधेयमित्यादिरूपमैदम्पर्यं पौषधव्रतपरमार्थस्तं, किं कृत्वा ?, 'पास'मिति सर्वभावान् पश्यतीति निरुक्तात् पार्श्वः, अपश्यच्चान्धकारेऽपि महान्धकारसोदरं काकोदरं गर्भानुभावाज्जननीति पितृदत्ताभिधानो वा पार्श्वः, पूर्वानुपूर्व्याऽ(स्याम)-वसर्पिण्यां त्रयोविंशस्तीर्थकृत्, तं'प्रणम्य'प्रकर्षेण कायवाङ्मनोभिः प्रह्वीभूय, प्रणम्येति क्त्वप्प्रत्ययोऽभिधेयापेक्षया समानकर्तृत्वं पूर्वकालिकत्वं च प्रणामस्य ध्वनयति, तेन पुरा पार्श्वप्रणतिः पश्चात्पौषधव्रतपरमार्थदर्शनमिति ध्येयं, 'प्र'शब्दोऽत्र भक्तिश्रद्धाऽतिशयलक्षणप्रकर्षद्योतकस्तेन पार्श्वं प्रणम्याहं पौषधव्रतपरमार्थं दर्शयामीत्यायातं, किं कृत्वा ? 'शुद्धदृष्ट्या'सम्यग्दर्शनेन गुरुवचनाञ्जनशलाकासम्पर्कसमुद्घाटितान्तरचक्षुषा च 'लब्ध्वा' प्राप्य, किं भूतं पार्श्वं ? "पसरियनाणपयासं" 'प्रसृतः' प्रकर्षेण विस्तृतो ज्ञानमेव–केवलावगमरूपमेव प्रकाशो यस्य सः, तथा तं प्रसृतज्ञानप्रकाशं, अथवा ज्ञानञ्च प्रकाशश्च ज्ञानप्रकाशौ, प्रसृतौ ज्ञानप्रकाशौ–केवलज्ञानशरीरतेजसी यस्य स तं, इत्यनेन भगवति ज्ञानातिशयः प्रशंसितः, पुनः किं भूतं पार्श्वं ? 'सर्वगुणवासं' सर्वे च ते गुणाश्च सर्वगुणास्तेषां, सार्वाणामर्हतां वा ये गुणास्ते सार्वगुणास्तेषां वास इव–आलय इव यः स, तं सर्वगुणवासं सार्वगुणवासं वा "वासोवेश्मन्यवस्थाने" इत्यनेकार्थः, यद्वा सर्वं जानाति सर्वेभ्यः प्राणिभ्यो वा हितः सार्वः, स चासौ गुणवासश्चेति कर्मधारये सार्वगुणवासस्तं, पुनः किं भूतं पार्श्वं ? 'अतिशयराशिसमृद्धं' जगतोऽप्यतिशेरते जिना एभिरित्यतिशयाः सहजकर्मक्षयोत्थसुरकृतरूपाश्चतुस्त्रिंशत्, वाग्गुणाश्च तेषां यो राशिस्समूहस्तेन समृद्धं इत्यनेन पूजातिशयो वचनातिशयश्च समवसेयौ, एतादृशो भगवानपायानां मूलत एवोन्मूलनाद्भवेदित्यपायापगमातिशयः, एतावता भगवति सर्वाधिकगुणत्वं प्रतिपाद्य परोपकारकारित्वेन तस्मिन्नेव सकलजनादेयत्वं विशेषणेनाह–पुनः किं भूतं पार्श्वं ? 'वांछितदानेने'प्सितवस्तुवितरणेन'सुप्रसिद्धं' लोके विशिष्टपुरुषादेयतया विदितं, एतावतैवास्याभीष्टदेवताकत्वेन शास्त्रादौ नमस्करणीयत्व-

मरणेन, अभीष्टदेवतानामानन्त्येऽपि पार्श्वं इति पदोपादानं परमगुरूणां श्रीमन्नवाङ्गीविवरणकरणगुरूणां श्रीमदभयदेवसूरिसुरतरूणामुपकारित्वेन तदनुयायिनामस्मदादीनां सुतरामुपकारकारकत्वमस्यावगमयति, वांछितदायकत्वं तु विघ्नव्यूहव्यपोहकत्वाऽविनाभावि, नहि विघ्नव्यूहमनपोह्य वांछितदायकत्वं घटामास्कन्दति, तथाच दुरितध्वंसक्षमत्वमप्यस्य निर्व्यूढं, किम्भूतं पौषधव्रतपरमार्थं ? 'सुरमहितश्रुतपयोनिधिमध्यगतं' सुरै-र्देवैर्महितं-समभ्यर्चितं सद्भूतगुणैः संस्तुतं वा यच्छ्रुतं-सिद्धान्तस्तदेवालब्धमध्यत्वादिगुणसाधर्म्येणोपचारात्पयोनिधिः-समुद्रस्तस्य मध्यं तद्गतं-प्राप्तं येन स तथा तं, सिद्धान्तान्तर्गतमिति भावः, पुनः किम्भूतं पौषधव्रतपरमार्थं ? 'जनानां'प्रस्तावात् भव्यसत्त्वानां'सुहितार्थं' सुष्ठु-शोभनो हित एवार्थः-प्रयोजनं यस्य स तथा तं, अथवा 'सुहितार्थं'सुष्ठु हितनिमित्तमिति क्रियाविशेषणं, अन्योऽपि परमकारुणिकः पश्यतीति पश्यस्तं पश्यं-सर्वज्ञं प्रणम्य 'सुरमथितश्रुतपयोनिधिमध्यगतं' सुरमथितश्चासौ श्रुतः प्रसिद्धश्चासौपयोनिधिश्च तस्य मध्यगतमन्तःस्थं 'अर्थं'द्रव्यं-रत्नादिरूपं 'शुद्धदृष्ट्या' अञ्जनविशेषविशिष्टचक्षुषा 'लब्ध्वा'उपलभ्य 'जनानां' सांयात्रिकलोकानां 'दर्शयति'-समादेयतया प्रकटीकरोति, किम्भूतमर्थं ? 'पौषधव्रतपरं' पौषधव्रते-इष्टजनपोषाभिग्रहे परं-प्रकृष्टं, किमर्थं ? 'सुखितार्थं' सुखिनो भावः सुखिता तदर्थं, सुखित्वनिमित्तमित्यर्थः, अत्राभिधेयः पौषधः, हितार्थपदेन कर्तृश्रोतृगतं प्रयोजनं, सम्बन्धस्तु वाच्यवाचकभावलक्षणोऽधिकारी तु प्रकरणादगारीति गाथाद्वयार्थः ।१-२। अथ प्रारब्धप्रकरणे अभिधेयं पौषधव्रतस्वरूपमुपवर्णयितुं गाथामाह-

आरंभदोसभारु-व्वहणेण य परिकिलंतचित्तस्स । आसासमिव पोसह-वयं पसंसंति वरगिहिणो ।३।

व्याख्या-गृहं विद्यते यस्य स गृही, वरश्चासौ गृही च वरगृही, तस्य वरगृहिणः, गृहस्थस्यापि वरत्वं गुरुपादमूलगृहीतजिनशासनप्रसिद्धाणुव्रतादिदेशविरतिमत्त्वात्, यतः संसारवासादतिशयोद्विग्नमानसा अपि मोक्षं यियासवोऽपि विशिष्टवीर्यान्तरायक्षयोपशमा-

भावेन पण्डितवीर्यमनुद्योतयन्तः सांसारिकपरिकरान्तःस्था देशविरतिरता गृहिणः समुपलभ्यन्ते, तस्माद्वरगृहिणो-विशिष्टगृहस्थस्य 'पौषधव्रतं'पौषधोपवासलक्षणं, 'आश्वासमिव'विश्रामस्थानमिव प्रशंसंति तीर्थंकरगणधरादय इत्युपस्कारः, किम्भूतस्य वरगृहिणः ? 'आरम्भदोषभारोद्वहनेन परिक्रान्तचित्तस्य' आरम्भ एव-सावद्यव्यापार एव जीवस्य दुष्टताकरणकारणत्वाद्दोषः आरम्भदोषः, स एव गुरुत्वहेतुत्वाद् भारस्तस्योद्वहनमुत्पाटनं तेन परिक्रान्तमिव परिक्रान्तं-खिन्नं निरुत्साहवत्त्वात् चित्तं-मानसं यस्य स, तस्य, तथाचोक्तं श्रीस्थानाङ्गे चतुर्थस्थाने (२३६ पत्रे) 'जत्थवि य णं चाउद्दसऽट्ठमुद्दिट्ठपुण्णमासिणीसु पडिपुण्णं पोसहं सम्मं अणुपालेइ तत्थवि य से एगे आसासे पण्णत्ते ३" इत्याद्यभ्यूह्यं, इति गाथार्थः ।३। अथाभिधेयनिर्णयाङ्गभूतसंशयस्य बीजं विप्रतिपत्तिरूपमाह-

पइदियहं सो कीरइ, नियमियपव्वेसु पक्खियाइसु वा । इय पोसहोववासे, विप्पडिवत्ती समक्खाया ।४।

व्याख्या-'पौषधोपवासे' उक्तस्वरूपैकादशव्रतरूपे 'इति' एवम्भूता 'विप्रतिपत्ति'र्विवदमानयोर्वादिनोर्विवादपदं 'समाख्याता'प्रोक्ता, इतीति किं ?, 'स' पौषधोपवासः 'प्रतिदिवसं' प्रतिदिनं यथावकाशमिति यावत् 'क्रियते' विधीयते श्राद्धैरिति शेषः 'वा'अथवा 'नियमितपर्वसु'नियमितानि-नामग्राहं पौषधे नियुक्तानि यानि पर्वाणि तेषु नियमितपर्वसु, पर्वणां बहुत्वेन नियमितपर्वस्वेव पौषधोपादानं न्याय्यमिति ज्ञापनार्थं नियमितपदोपादानं, दशाश्रुतस्कन्धनिर्युक्तौ पञ्चकपरिहाण्यादिव्यवस्थायां पञ्चम्यादितिथीनामपि पर्वत्वेन व्यपदिश्यमानत्वात्, न च तेषु पौषधोपादानं क्वापि न्यरूपि, ततो नियमितपर्वस्विति सुष्टूक्तं. तान्येवाह-'पाक्षिकादिषु' गीतार्थाचरणया पाक्षिकं-चतुर्दशी तदादिर्येषामष्टम्यादिपर्वणां तानि तथा, तेषु चतुर्दश्यष्टम्युद्दिष्टापूर्णमासीप्रभृतिष्वित्यर्थः, तथा च प्रतिपदादिषु सर्वास्वपि तिथिषु पौषधो ग्राह्य इति पूर्वपक्षपरामर्शः, नियमितेष्वेव पर्वसु स ग्राह्य इति सैद्धान्तिक सम्मतमिति भावः ।४। अथ परवादिविकल्पितपूर्वपक्षे प्रतिवचनमाह-

सव्वेहिं सुयहरेहिं, कहियं विहिचरियवायसुत्तेहिं । चाउद्दसऽट्ठमुद्दिट्ठ-पुण्णमासीसु वयमेयं ।५।

व्याख्या-'एतद्व्रतं' पौषधोपवासस्वरूपं 'सर्वैः'सकलैः 'सार्वैर्वा अर्हत्प्रवचनीयैः 'श्रुतधरैः' श्रुतं द्वादशाङ्गीरूपं धरन्तीति श्रुतधरास्तैः, चतुर्दश्यष्टम्युद्दिष्टापूर्णमासीषु प्रवचनप्रसिद्धतिथिषु'कथितं'विधेयतया निवेदितं, श्राद्धानामिति ध्येयं, कैः साधनभूतैः ? 'विधिचरितवाद-सूत्रैः', विधिः-कर्तव्यार्थोपदेशश्चरितं-दृष्टान्तपद्धतिः, विधिश्च चरितं च विधिचरिते, तद्रूपो यो वादो विधिचरितवादस्तत्प्रधानानि यानि सूत्राणि विधिचरितवादसूत्राणि, तैर्विधिचरितवादसूत्रैः, अयम्भावः-श्रुते विधिवादेन चरितानुवादेन च नियमितदिनेष्वेव पौषधोपवासो गणधरैर्न्यगमि, सर्वत्रापि तथैवोपलब्धेः, विधिवादे यथा-"से जहा नामए समणोवासगा भवंति अभिगयजीवाजीवा उवलद्धपुण्णपावा आसवसंवरवेयणाणिज्जराकिरियाहिगरणबंधमोक्खकुसला असहिज्जदेवासुरनागसुवण्णजक्खरक्खसकिन्नरकिंपुरिसगरुलगंधव्वमहोरगादीएहिं निग्गंथाओ पावयणाओ अणतिक्कमणिज्जा, इणमेव निग्गंथे पावयणे णिस्संकिया णिक्कंखिया निव्वितिगिच्छा लद्धट्ठा गहियट्ठा पुच्छियट्ठा विणिच्छियट्ठा अभिगयट्ठा अट्ठिमिंजपेमाणुरायरत्ता, अयमाउसो ! निग्गंथे पावयणे अट्ठे अयं परमट्ठे, सेसे अणऽट्ठे ऊसियफलिहा अवंगुयदुवारा अचियत्तंऽतेउरपरघरपवेसा चाउद्दसऽट्ठमुद्दिट्ठपुण्णमासिणीसु पडिपुण्णं पोसहं सम्मं अणुपालेमाणा समणे निग्गंथे फासुएसणिज्जेणं असणपाणखाइमसाइमेणं वत्थपडिग्गहकंबलपायपुंछणेणं ओसहभेसज्जेणं पीढफलगसिज्जासंथारएणं पडिलामे-माणा बहुहिं सीलव्वयगुणवेरमणपच्चक्खाणपोसहोववासेहिं अहापरिग्गहिएहिं तवोकम्मेहिं अप्पाणं भावेमाणा विहरंति"इति श्रीसूत्र-कृताङ्गस्याष्टादशाध्ययने ( ३३५ पत्रे ) विधिवादेन साक्षादेव श्रुतधरैश्चतुर्दश्यष्टम्युद्दिष्टापूर्णमासीष्विति वर्णनोपनिबन्धादेतेष्वेव पर्वसु श्रावकाणां पौषधव्रतमादिष्टं, न चान्यदाऽपि, तथा तत्रैव त्रयोविंशाऽध्ययने (४१९ पत्रे) 'भयवं ! च णं संतेगतिया समणोवासगा

भवंति, तेसिं न णं एवं वुत्तपुव्वं हवइ-नो खलु वयं संचाएमो मुंडे भवित्ता आगारातो अणगारियं पव्वइत्तए, वयं च णं चाउद्दसऽट्ठमुद्दिट्ठ-पुण्णमासिणीसु पडिपुण्णं पोसहं सम्मं अणुपालेमाणा विहरिस्सामो"इति वाक्यात् तथा "जत्थवि य णं चाउद्दसऽट्ठमुद्दिट्ठपुण्णमासिणीसु पडिपुण्णं पोसहं सम्ममणुपालेइ तत्थवि य से एगे आसासे पण्णत्ते ३" इति श्रीमत्स्थानाङ्गे ( २३६ पत्रे ) तुर्यस्थानवाक्यात् तथा "अगारिसामाइयंगाणि, सड्ढी काएण फासए। पोसहं दुहओ पक्खं, एगरायं न हावए ।२३।" इति श्रीमदुत्तराध्ययनेषु पञ्चमाध्ययने, "व्याख्या-'अगारिणो' गृहिणः 'सामायिकं'सम्यक्त्वश्रुतदेशविरतिरूपं तस्याङ्गानि निःशङ्कितकालाध्ययनाणुव्रतादिरूपाणि अगारि-सामायिकाङ्गानि, 'सड्ढि'त्ति सूत्रत्वात् श्रद्धा-रुचिरस्यास्तीति श्रद्धावान् 'कायेने'त्युपलक्षणत्वान्मनसा वाचा च 'फासइ'त्ति स्पृशति-सेवते, पोषणं पोषः, सनेह धर्मस्य तं धत्ते इति पोषधः आहारपोषधादिस्तं 'दुहतो पक्खं'ति तत एव द्वयोरपि सितेतररूपयोः पक्षयोश्चतुर्दशी-पुर्णमास्यादिषु तिथिषु 'एगरायं'ति अपेर्गम्यमानत्वादेकरात्रमपि, उपलक्षणत्वाच्चैकदिनमपि 'न हावए'त्ति न हापयति-न हानिं प्रापयति, रात्रिग्रहणञ्च दिवा व्याकुलतया कर्त्तुमशक्नुवन् रात्रावपि पौषधं कुर्यात्"इति (२५१ पत्रे) बृहद्वृत्ति(पाइटीका)व्याख्यानात्, तथा "जे इमे × × समणोवासगा भवंति अभिगयजीवाजीवा"इत्यादि "चाउद्दसऽट्ठमुद्दिट्ठपुण्णमासिणीसु सम्मं पोसहमणुपालेमाणा" इत्यादि (१०५ पत्रे) उपपातिकोपाङ्गवाक्यात्, तथा "सुवति जिणभासियाइ, सेविज्जए सामाइयाइयमावस्सयं, घिप्पए पव्वदियहेसु पोसहं, किं बहुणा" इति श्रीठाणावृत्तौ देवधरप्रबन्धवाक्यात्, तथा "पोषं धत्ते पौषधः-अष्टमी चतुर्दश्यादिः पर्वदिवसः, उपेति-सह उ(अ)पावृत्त-दोषस्य सतो गुणैराहारपरिहारादिरूपैर्वासः उपवासः, यथोक्तं-'उपावृत्तस्य दोषेभ्यः, सम्यग्वासो गुणैः सह। उपवासः स विज्ञेयो, न शरीरविशोषणं ।१०३। ततः पौषधेषूपवासः-पौषधोपवास"इति (३५ पत्रे) धर्म्मबिन्दुवृत्तिवाक्यात्, तथा "कर्त्तव्यः-विधेयः स नियमात्-

नियमेनाष्टम्यादिपर्वसु–अष्टमीचतुर्दश्यादिपूत्तरतिथिष्वि"ति (२७१ पत्रे) नवपदप्रकरणसूत्रवृत्तिवाक्यात्, तथा "पोषं-पुष्टिं प्रक्रमाद्धर्म्मस्य धत्ते-करोतीति पौषधः–अष्टमीचतुर्दशीपूर्णिमाऽमावास्यादिपर्वदिनानुष्ठेयो व्रतविशेषः"इति धर्मरत्नप्रकरण(द्वितीयभाग ६४ पत्रे)वृत्तिकृद्देवेन्द्रसूरिवाक्यात्, तथा "चतुष्पर्व्यां चतुर्थादि–कुव्यापारनिषेधन"मिति (पत्र १७८) योगशास्त्रवृत्तेश्चेत्यादिग्रन्थसार्थपाठाद्विधिवादेन श्रावकाणां पर्वस्वेव पौषधव्रतं श्रुतधरा निर्धारयाञ्चक्रुः, न सार्वदिकं, यदि सामायिकव्रतवत्तत्सार्वदिकं स्यात्तदा श्रुतपारदृश्वानः प्रतिपदादितिथिष्विति लिपि(लिपि)मातृकुर्युस्तिथीनां तदादित्वात्, न च सर्वदा तत्करणशक्तेरभावाच्चतुर्दश्यादिपर्वग्रहणमिति वाच्यं, शक्त्यभावादिति हेतोरपवादिकत्वेन विशेषविषयित्वात्सर्वोपासकसामान्यविधिवादे तस्यानवकाश एव, विधिवादस्य तत्तन्निमित्तविशेषनिरपेक्षत्वेनोत्सर्गपरत्वमिति भाव्यं, सर्वथा शक्त्यभावेऽप्यपि श्राद्धे श्रुतोक्तैतत्पर्वतिथिषु तदवश्यम्भावप्रसङ्गश्च स्यान्नचैवं सर्वतन्त्रसिद्धः सिद्धान्त इति, तथा चरितानुवादेऽपि स्थाने स्थाने देशविरतिमत्तच्छ्राद्धनामपुरस्कारेण तद्गुणवर्णनावसरे पोषधव्रतं पर्वस्वेव प्ररूपयाञ्चक्रुः, नापर्वसु, तद्यथा सूत्रकृताङ्गे द्वितीयश्रुतस्कन्धे नालन्दीयाध्ययने लेपश्रावकवर्णनाधिकारे "चाउद्दसऽट्ठमुद्दिट्ठपुण्णमासीणीसु पडिपुण्णं पोसहं सम्ममणुपालेमाणे विहरति" तथा श्रीव्याख्याप्रज्ञप्त्यां (१३४ पत्रे) तुङ्गिकानगरीवास्तव्योपासकवर्णनाधिकारे तथा वरुणाधिकारे तथा आलम्भिकोपासकवर्णने तथा शंखपुष्कलीवर्णने तथा जयन्तीवर्णके तथा ऋषभदत्तोपासकोपनये तथा कार्त्तिकश्रेष्ठिवर्णने तथोदायनराजाधिकारे तथा सोमिलाधिकारे अन्येष्वपि बहुष्वधिकारेषु "चाउद्दसऽट्ठमुद्दिट्ठपुण्णमासिणीसु" इत्यादि पाठेनापाठभावेन नियमितपर्वदिनेष्वेव पौषधकर्त्तृत्वं यथाप्रस्तावं गणभृद्भिरसूत्रि श्रुतस्थविरसूत्रणासूत्रधारैः, तथा श्रीज्ञाताधर्म्मकथायां अरहन्नकश्रावकवर्णके तथा जितशत्रुसुबुद्धिश्राद्धसम्बद्धसम्बन्धे तथा नन्दमणिकारवर्णके एवं बहुषु स्थानेषु तथाभूतपाठपठनेन पर्वस्वेव पौषधव्रतमबोधि, तथोपासकदशासु आनन्दादिदशोपासकवर्णके दशस्वप्यध्ययनेषु

पर्वदिनेष्वेव तृतीयशिक्षाव्रतमाख्यातवन्तो भगवन्तः, तथा विपाकश्रुतेऽपि सुबाहुप्रभृतिषु दशसु सुखविपाकीकाध्ययनेषु सूत्रपाठेनैव चतुर्दश्यादितिथिषु नामग्राहं पौषधव्रतमबोधि, तथौपपातिकोपाङ्गे अम्बडोपासकवर्णकेऽपि चतुर्दश्यादितिथिष्वेव पौषधवर्णनं सर्वविदो निवेदितवन्तः, यद्येतस्य परिव्राजकवेषवत्त्वेन भिक्षावृत्तिवर्त्तनादिना स्वयं पाकादिसावद्यवर्जकस्यापि अव्यापारशरीरसंस्कारयोरपि प्रतिनियतता करणेन देशतरततोऽपि निवृत्तस्यापि ब्रह्मचारिणोऽपि पौषधकरणे सार्वदिकत्वानिरूपणं, तत् शक्त्यभावात्सर्वदा पौषधव्रतं कर्तुमशक्यमिति तद्व्रतस्य चतुर्दश्यादितिथिनियमनमिति विपक्षविवक्षितवाक्याभासस्योपहास्यतामावेदयति, तस्य सुतरां सावकाशत्वात्, नचैतत्तीर्थीयोपासकानां सर्वेषामपि शक्तिविशेषाभावत्वं भवदुक्तं विनाभक्तं कोऽपि प्रत्येति, तथा श्रीराजप्रश्नीयोपाङ्गेऽपि चित्रोपासकवर्णके (१२२ पत्रे) "चाउद्दसऽट्ठमुद्दिट्ठपुण्णमासिणीसु पडिपुण्णं पोसहं सम्मं अणुपालेमाणे" इति पाठेन तथा "चतुर्दश्यामष्टम्या'मुद्दिष्टा'या'मित्यमावास्यायां पौर्णमास्यां च 'प्रतिपूर्ण'महोरात्रं यावत् 'पौषध'माहारादिपौषधं सम्यग् अनुपालयन्" इति व्याख्यानेन, तथा श्रीवाणारसी नेटकराजवर्णके "चाउद्दसऽट्ठमुद्दिट्ठपुण्णमासिणीसु पडिपुण्णं पोसहं अणुपालेमाणो विहरइ" एतद्व्याख्या—"उद्दिट्ठत्ति-अमावास्याः पुण्णमासिणी त्ति-पूर्णमासी" इति पाठेन च पर्वदिनेष्वेव पौषधव्रतमावेदितमिति, एवं सर्वैरपि बहुश्रुतैः प्रतिश्रुतं विधिचरितवादप्रवादे पर्वस्वेव तद्व्यक्तीकृतं नापर्वस्वपीति सूक्ष्मेक्षिकया विभाव्यमिति गाथार्थः ।५। न केवलमेता एव श्रुततिथयः पौषधकरणेऽङ्गीकार्याः, किन्तु कथञ्चिदागमपदस्यार्थान्तरव्याख्यानेन गीतार्थान्तरसूचिता अन्या अपीत्याह—

तह उद्दिट्ठपएणं, पसिद्धकल्लाणयाइसु सुतिहीसु । संगहियं वयमेयं, सिरिसीलंगेण बितियंऽगे । ६ ।

व्याख्या—'तथे'ति अप्यर्थं, स च भिन्नक्रमस्तेन'श्रीशीलाङ्केन'श्रीशीलाङ्काचार्येण 'द्वितीयाङ्गे'श्रीसूत्रकृताङ्गे त्रयोदिशाध्ययने लेपोपा-

गणधरवर्णने, उद्दिष्टपदेन प्रसिद्धकल्याणकादिषु सुतिथिष्वपि, 'प्रसिद्धाः' सुरासुरनरविद्याधराराध्यत्वेन विख्यातास्तथा 'कल्याणकै'-र्जिन-च्यवनजन्मदीक्षाज्ञाननिर्वाणादिरूपैरुपलक्षिताः सुतिथयः, ततः कर्मधारये प्रसिद्धकल्याणकादिसुतिथयस्तास्वपि 'एतद्व्रतं' पौषधव्रतं ग्रहणद्वारा संगृहीतं द्रष्टव्यं इति शेषः, तथा च तत्सूत्रं "तत्थ णं नालंदाए बाहिरियाए लेवे णामं गाहावती होत्था × × जाव अहिगय-जीवाजीवे × × जाव चाउद्दसऽट्ठमुद्दिट्ठपुण्णमासिणीसु पडिपुण्णं पोसहं सम्ममणुपालेमाणे × × विहरइ, व्याख्या–चतुर्दश्यष्टम्यादिषु तिथिषु 'उद्(उद्दि)ष्टासु' महाकल्याणकसम्बन्धितया पुण्यतिथित्वेन प्रख्यातासु तथा 'पूर्णमासीषु च' तिसृष्वपि चतुर्मासकतिथिष्वित्यर्थः, एवम्भूतेषु धर्मदिवसेषु सुष्ठु-अतिशयेन प्रतिपूर्णो यः पौषधो व्रताभिग्रहविशेषस्तं प्रतिपूर्ण–आहारशरीरसत्कारब्रह्मचर्याव्यापाररूपं पौषधमनुपालयन् सम्पूर्णं श्रावकधर्ममनुचरती"ति (सूत्रकृताङ्गे ४०८ पत्रे), तथा च श्रीशीलाङ्काचार्यै'रुद्दिष्ट' शब्देन कल्याणकादिप्रसिद्धतिथिष्वपि लेपश्रावकस्य पौषधः समुपदिष्टस्तथान्यकल्याणकतिथिष्वपि पौषधव्रतमादेयमिति भावार्थः ।६। ननु तदर्थयुक्त्या कल्याणकादितिथिषु पौषधव्यवस्थाऽऽश्रितावपि "मण्डूकतोलन"न्यायेन शेषपूर्णिमानाममावास्यादीनां चाऽनङ्गीकारात्तासामनाराध्यत्वमनिष्टमप्यायातमेवेत्यारेकामपाकुर्वन्नाह–

चउमासयाऽतिरित्ता, वि पुण्णिमाऽमावसापसिद्धत्ता । उद्दिट्ठपए निहिया, तेहि वि संवच्छरिव्व तहिं ।७।

व्याख्या–'तहिं'ति तत्र श्रीसूत्रकृताङ्गे 'तैरपि' श्रीशीलाङ्काचार्यैरपि, किम्पुनरन्यैः ?, 'चतुर्मासकातिरिक्ता'श्चतुर्मासकत्रयव्यतिरिक्ता 'अपि' शब्दः समुच्चये, स च भिन्नक्रमस्तेन नवपूर्णिमा अमावास्याश्च द्वादश 'प्रसिद्धत्वा'त्पुण्यतिथित्वेनेति शेषः, किं ?'सांवत्सरिकवत्' पर्युषणापर्ववत् उद्दिष्टपदे'निहिता'स्थापिता, अयम्भावः–'उद्दिष्ट'पदेन तु पुण्यतिथित्वेन प्रख्यातत्वमावेदितं, पूर्णिमाऽमावास्यानां तु प्रसिद्धत्वं परसमये स्वसमये च नियतमेव, परसमये यथा विष्णुपुराणे "चतुर्दश्यष्टमी चैव, अमावास्या च पूर्णिमा । पर्वाण्येतानि राजेन्द्र !, विद्धि

सङ्क्रान्तिरेव च ।२।"इति । स्वसमये तु तृतीयाङ्गे तृतीयआश्वासाधिकारे (२३७ पत्रे) "उद्दिष्टेत्यमावास्या" एवं प्रज्ञप्त्यां (१३६ पत्रे "इहोद्दिष्टा-अमावास्या"इति) तुंगीयानगरीसत्कोपासकवर्णके तथा जलवर्द्धनावसरे पञ्चविंशे शते च तथा तुर्याङ्गे तुर्योपासकप्रतिमाधिकारे ज्ञाताधर्मकथायां सेलकयक्षाधिकारे अन्यत्र च, उपपातिकायामुपासकवर्णके एवं राजप्रश्नीयोपाङ्गे चित्राधिकारे श्रीजीवाभिगमे समुद्रवेला-ऽऽगमनाधिकारे तथा दशाश्रुतस्कन्धचूर्णौ प्रतिमाधिकारे "उद्दिट्ठा-अमावसा" तथा द्वितीयाङ्गचूर्णावष्टादशाध्ययने "उद्दिट्ठा-अमावसा" तथा पञ्चाशकचूर्णौ प्रतिमाधिकारे "अट्ठमिचउद्दसाइसु, आइसद्दाओ पुण्णिमाऽमावसाओ घिप्पंति" तथा "छण्हं तिहीण मज्झंमि, का तिही अज्जवासरे ?" इति श्रावकदिनकृत्यसूत्रे (सत्य० ग्रं० प्र० ७ पत्रे), "व्याख्या-मासाभ्यन्तरमिति गम्यं 'षण्णां तिथीनां'सितेतराष्टमी-चतुर्दशीपूर्णिमाऽमावास्यालक्षणानां मध्ये का तिथिरद्यवासरे ?"इति व्याख्यायां, एवं स्थाने स्थाने सर्वपूर्णिमाऽमावास्यानां प्रसिद्धत्व-मिति गाथार्थः ।७। नन्वृद्दिष्टपदे पूर्णिमाऽमावास्यादीनां प्रसिद्धतिथीनामभ्युपगमसिद्धान्तेनात्रानुप्रवेशोऽस्माभिरङ्गीकृतेऽपि पौषधाधिकारे अनभिमतानां द्वितीयापञ्चम्येकादशीरूपप्रसिद्धतिथीनामपि तत्रैवानुप्रवेशे तास्वपि भवतस्तत्सङ्गतिरायाता, सोऽयमेकं सन्धित्सतोऽपरं प्रच्यवते इति न्यायोऽत्राभातीति पराशयं निरस्यन्नाह-

तुल्ले वि पसिद्धत्ते, निहियाउ वए एया(इमा)उ नऽन्ना(ओ)उ । तह आगमुत्तमेयासु पक्खियं वन्नियं सत्थे ।८।

व्याख्या-'प्रसिद्धत्वे तुल्येऽपि' प्रसिद्धत्वाविशेषेऽपि 'एयाउ'त्ति एते पूर्णिमाऽमावास्यालक्षणे तिथी 'व्रते'पौषधग्रहणावसरे'निहिते' नियतत्वेन न्यस्ते 'न अन्याः' द्वितीयापञ्चम्येकादशीरूपाः, तथाहि "सव्वेसु कालपव्वेसु, पसत्थो जिणमए तवो जोगो । अट्ठमिपन्नर-सीसु य. नियमेण हविज्ज पोसहिओ ।१।" इत्यावश्यकचूर्णि(उत्तरार्द्धे ३०४ पत्रे)पञ्चाशकचूर्णिजीवानुशासनवृत्तिवाक्येन, तथा "यत

भार-भागसेनः-सर्वेष्वपि तपोयोगः, प्रशस्तः कालपर्वसु । अष्टम्यां पञ्चदश्यां च, नियतं पौषधं वसेत् ।१।" इति श्रीशान्त्याचार्यकृतो-त्तराध्ययनगम्भनरमाध्ययनबृहद्वृत्ति (पत्र ३१५) वचनेन चैतयोः पौषधव्रतनियतत्वं ध्येयं, न च क्वाप्यागमे द्वितीयापञ्चम्येकादशीषु पौषधस्याङ्गीकारः श्रूयते, प्रसिद्धिस्तेनासां प्रत्याख्यानादिकृत्यविशेषमधिकृत्य बोध्या, तद्यथा-द्वितीयैकादश्योः प्रसिद्धिः प्रवादात्, पञ्चम्यास्तु "सेसे पवकीरिगपुरिसकारपरमे अट्ठमिचउद्दसीनाणपंचमीपज्जोसवणाचाउम्मासिएसु चउत्थछट्ठऽट्ठमे न करेज्जा पच्छित्त"मिति महानिशीथश्रुतात्पाप्रसिद्धिः, यत्तु कैश्चित्पञ्चकमक्रमे निशीथचूर्ण्यभिप्रायेण पञ्चम्याः पर्वत्वमिष्यते तदसाधुः, तदभिप्रायेण "पव्वसु पज्जोसवियव्वं, नो अपव्वेसु" इति वचनात् धितीयैकादशीचतुर्दशीनामपर्वत्वमप्यादेयं स्यात्, तस्माद्यथाकथञ्चित्प्रसिद्धत्वेऽपि द्वितीयादितिथिषु कल्याणकादुत्तरविशेषणाकान्तासु न पौषधं समुपादेयं इत्यायातं, तदियता रत्नशेखरसूरिकृतप्रतिक्रमणसूत्रवृत्तौ केषुचिन्नव्यादर्शेषु(मुद्रिते १६५ पत्रे) केनचिदाधुनिकेन "अट्ठमिचउद्दसीसु य, नियमेण हविज्ज पोसहिओ" इत्यावश्यकचूर्णिपाठो निहितोऽस्ति स निरस्तो द्रष्टव्यः, 'तवे'ति पुनरपि तयोः प्रसिद्धत्वे हेत्वन्तरमाह-'एयासु'त्ति "वहुवयणेण दुवयण"मिति प्राकृतशैल्या एतयोः-पूर्णिमाऽमावास्ययोः 'शास्त्रे' गीतार्थजननिर्मितग्रन्थे 'आगमोक्तं' सिद्धान्तप्रतिपादितं'पाक्षिकं' भावप्रधाननिर्देशात्पाक्षिकत्वं'वर्णितं'प्ररूपितमित्यर्थः, तथाहि-"एवं च कारणेण कालगायरिएहिं चउत्थीए पज्जोसवणं पवत्तियं, समत्तसंघेण य अणुमन्नियं, तव्वसेण य पक्खियाइंणि वि चउद्दसीए आयरियाणि, अण्णहा आगमुत्ताणि पुण्णिमाए" इति श्रीदेवचन्द्रसूरिकृतायां श्रीठाणावृत्तौ, नचात्र त्रिंशदधिकषोडशशतवत्सरीयः पत्तनोपपुरकुंणगिरिस्थदर्शनवाणपरिकल्पितः "चाउम्मासियाणि चउद्दसीए आयरियाणी"ति पाठः समाश्रयणीयः, तत्पूर्वजेनापि पूर्वपाठस्यैव समर्थनात्, तथाहि "एवं कारणेण कालगायरिएहिं चउत्थीए पज्जोसवणं पवत्तियं, समत्तसंघेण य अणुमन्नियं, तव्वसेण य पक्खियाइंणि वि चउद्दसीए

आचरियाणि, अमहा आगमसुत्ताणि पुण्णिमाए-त्ति ठाणावृत्तौ श्रीदेवचन्द्रसूरिकृतायां, इह व्यवहारचूर्ण्यादौ चतुर्दश्याः साक्षात्पाक्षिकत्वे दृश्यमाने पूर्णिमायाश्च क्वाप्यागमे साक्षाददृश्यमानेऽपि ग्रन्थकृता 'आगमोक्तानि पूर्णिमाया'मिति यदुक्तं तन्न ज्ञायते केनाभिप्रायेण मात्सर्यरूपेण वेति, परमेतस्मिन्नपि ग्रन्थे चतुर्थीपर्ववत् आचरितलक्षणोपेतत्वात् चतुर्दश्यां पाक्षिकादीनि प्रमाणीकृतान्येव सन्तीति पाक्षिक विचारः" विचारामृत(संग्रह)ग्रन्थे श्रीकुलमण्डनाचार्यकृते । नन्वेवं सर्वपञ्चदशीनामुच्छिन्नाधिकाराधिकारिणामिवानाराध्यत्वमेवायातमिति चेन्न, तासु पाक्षिककृत्यापसारणेऽपि पर्वत्वाक्षितेः, न च भाद्रपदविशदपञ्चम्यामपि पर्वत्वापत्तिरिति वाच्यं, कालिकाचार्यादर्वाचीनश्रुतधरैरपि "अट्ठमिपन्नरसीसु य, नियमेण हविज्ज पोसहिओ" इत्याद्युक्तवाक्यैः सर्वपञ्चदशीनामाराध्यत्वेनाभिधानात्, भाद्रपदविशदपञ्चम्यास्तु पर्वत्वेनानभिधानाच्च नोक्तदोषावकाशः, चातुर्मासिकपञ्चदशीनामनाराध्यत्वमसङ्गस्य भवतोऽपि समत्वादिति मृग्यं, "आगमसुत्ताणि पुण्णिमाए"इत्यत्र अमावास्योपलक्षणं द्रष्टव्यं, यतः "ता कहं ते !"इत्यादि सूत्रं, 'ता'इति पूर्ववत्'कथं' ? केनप्रकारेण केन नक्षत्रेण परिसमाप्यमाना इत्यर्थः, पौर्णमास्यः आख्याताः, अत्र पौर्णमासीग्रहणं अमावास्योपलक्षणं, तेन कथममावास्या आख्याता इति वदेत्" इति सूर्यप्रज्ञप्तिवृत्तौ दशमप्राभृतसत्कषष्ठप्राभृतप्राभृतेऽपि (११२ पत्रे) तथोक्तेः, तथैतद्ग्रन्थबोधितार्थसंवादो ग्रन्थान्तरादप्यवसेयः, तद्यथा-"पूज्या इहा(अत्रा)र्थे वदन्ति-यदा सांवत्सरिकं पञ्चम्यामासीत्तदा पाक्षिकाणि पञ्चदश्यां सर्वाण्यभूवन" इति जीयानुशासनवृत्तौ पूर्वाचार्यकृतायां (२१ पृष्ठे), न चायं ग्रन्थकर्त्ता देवसूरिः पौर्णमिक इति वाच्यं, तत्रैव ग्रन्थे "साम्प्रतं चतुर्थ्यां पर्युषणा ततश्चतुर्दश्यां पाक्षिकाणि घटन्ते" इति वाक्याच्चतुर्दश्यामेवैतस्य पाक्षिककर्तृत्वाभ्युपगमात्, न च "सालाहणेण रण्णा, संघाएसेण कारिओ भयवं । पज्जोसवणचउत्थि, चाउम्मासं चउद्दसिए ।१।"इति तीर्थोद्गारादिग्रन्थप्रसिद्धगाथासम्मत्या अन्यः पाठः सम्यगाभातीति वाच्यं,

एतद्गाथाया मूलतया कल्पितेष्वपि तीर्थोद्गारादिष्वदर्शनात्, नहि निर्मूलमालम्बनं समालम्ब्य पाठान्तरकरणसमुद्यतो न हास्यास्पदं, न च जिनप्रभाचार्यैरप्येषा समालम्बिता इति वाच्यं, तत्पूर्ववर्त्तिकल्पविषमपदनिरुक्तकृद्विनयेन्दुसूरिकृतं "वायणंतरे पुण नवसयतेणउएणं" इत्येतत्पदव्याख्यानमुपजीव्य तैस्तत्पदव्याख्याने तथैव "तेणउयणवसएहिं" इत्यादिगाथाकदम्बकस्य लिखितत्वात्, नहि निरुक्तकारेण तद्ग्रन्थेष्वेताः गाथाः उपलब्धा भविष्यन्तीति वाच्यं, तथा सति तत्पूर्वकालवर्त्तिभिर्गीतार्थैः श्रीदेवसूरिभिश्चतुःपष्ट्यधिकैकादशशतवर्षे विहित-श्रीवायुशासनवृत्तौ पश्चदश्यां पाक्षिकाणि पूर्वोद्दिष्टनीत्या नोद्दिष्टानि भवेयुः, ततः श्रीहेमाचार्यगुरुभिः स्थानाख्यग्रन्थकारैरपि किञ्चि-न्न्यूनमपि क्रियत्कालानन्तरवर्त्तिभिः स्वग्रन्थे तथैव पाठो ग्रथितो, न दूष्यश्चायं, तेषामपि तत्समयवर्त्तिसर्वस्वसमयदर्शित्वात्, नह्येतस्य तदद्रष्टत्वेऽपि निरुक्तकारस्य तद्द्रष्टत्वं भविष्यतीति वाच्यं, तथा सति तदुक्त"तेणउयनवसएहिं, समइक्कंतेहिं वद्धमाणाओ। पज्जोसवणचउत्थी, कालगसूरिहिं तो ठविया ।१।"इति गाथां "वायणंतरे पुण नवसयतेणउएणं इइ दीसइ"इति कल्पाध्ययनसत्कपदव्याख्यानव्यतिकरे कल्पकिरणावल्यां निशीथचूर्णिनिदर्शनदर्शनेन किमिति तत्कर्त्ता निषेधितवान्?, एतद्गाथायाः दुष्टत्वे विनयेन्दुसूरेस्तद्दृष्टतीर्थोद्गारादेरपि स्वमुखेनैव दुष्टत्वं-सम्प्रीष्टमिति समायातोऽयं 'मितो दुस्तटीतो व्याघ्र' इति न्यायः, तस्मात्त्यज तद्गाथानां तद्ग्रन्थेषु तेषां दर्शितत्वं त्यज वा "नवसयतेणउएणं" इति गाथायां दुष्टताभिसन्धिमिति प्रतिबन्दी, न च भवतोऽपि "सालाहणेण रण्णा"इति गाथाया अनङ्गीकारेण "नवसयतेणउएणं" इति गाथोक्तार्थाङ्गीकारेण च समानेयं प्रतिबन्दीति वाच्यं, नास्माभिः "सालाहणेणे"ति गाथा सर्वतो निषिध्यते, किन्तु नहि निर्मूलप्रायया गाथया पाठान्तरकरणं युक्तमित्युक्तं, एतन्मूलन्तु "विक्रमार्कात्सपञ्चाशच्छतत्रयीमितवर्षे चतुर्दशीपक्षो बभूवे"ति केषुचिज्जूर्णपट्टावलीपत्रे-षूपलभ्यते, ततश्चैता गाथाः केनचित्तत्पक्षीयेण गीतार्थेन कृता इति विभाव्यते, "चउमासगपडिक्कमणं पक्खियदियहंमी"ति वाक्येन साकं

सङ्गच्छते नेत्थं, तथाच कालिकाचार्यैश्चतुर्दश्यां चतुर्मासकमतिक्रमणं कृतमित्यपि तेनैव लिखितमिति विभाव्यते, चतुर्दश्यां पाक्षिकत्वस्य तत्पूर्वंजेन पूर्वमेवक्तत्वात्, तथापि चतुर्दश्यां तदाचरितमायातं, शेपगीतार्थैस्तां व्यवस्थामनङ्गीकुर्वद्भिः श्रीकालिकाचार्याश्चतुर्दश्यां पाक्षिकाणि चतुर्मासकाणि च 'चक्रु'रिति स्वोपज्ञशास्त्रेषु लिलिखे इति, तत्त्वमत्र बहुश्रुतगम्यमिति, "नवसयतेणउएण"मिति गाथा तु मलधारिगच्छीयश्रीराजशेखरसूरिणा पुरैव तदुक्तनिशिथचूर्णीविसंवादरूपदोषापाकरणेन स्वकृतचतुर्विंशतिप्रबन्धग्रन्थे (८२ पत्रे) शातवाहनप्रबन्धे समर्थिता, तथाहि "श्रीवीरे निरङ्गते ४७०वर्षे विक्रमार्कों राजाऽभवत्, तत्कालीनोऽयं शातवाहनस्तत्प्रतिपक्षत्वात्, यस्तु कालिकाचार्यपार्श्वात्पर्युषणामेकेनान्हा अर्वागानाययत्स शातवाहनस्ततोऽन्यः सम्भाव्यते, अन्यथा 'नवसयतेणउएहिं, समइक्कंतेहिं वीरमुक्खाओ । पज्जोसवणचउत्थी. कालगसूरिहिं तो ठविया ।१।'इति चिरन्तनगाथाविरोधप्रसङ्गात्, न च शातवाहनक्रमिकः शातवाहन इति विरुद्धं, भोजपदे बहूनां भोजत्वेन. जनकपदे बहूनां जनकत्वेन रूढत्वात्, इति शातवाहनचरित्र"मिति ध्येयं, भवत्पूर्वाचार्यैरपि स्थाने स्थाने तद्गाथोक्तभावाभ्युपगमेन सा समधिकं सम्मानिता, तत्र कुलमण्डनाचार्यकृते विचारामृतसंग्रहे तुर्यविचारे तथा कुलमण्डनकृतकल्पावचूर्णौ तथा रत्नशेखरसूरिकृतश्राद्धविधिवृत्तौ तथा धर्मघोपसूरिग्रथितकालसप्ततिकाप्रकरणेऽपि भवदभ्युपगते एतद्गाथायाः प्रामाण्यसमर्थनात्, सर्वपट्टावलीपत्रेषु तदंशोल्लम्भनाय सद्भूतेयं गाथा प्रतिभातीति ध्येयं, न च "आगमुत्ताणि पुण्णिमाए" इति वाङ्मात्रात्केवलं सुहृद एव निरन्तरं मत्यार्थयितव्या न वयमिति वाच्यं, श्रीव्याख्याप्रज्ञप्त्यां शंखाधिकारे (५५३ पत्रे) "पक्खियं पोसहं पडिजागरमाणा विहरिस्सामो" इति, सूत्रैकदेशव्याख्यायां (५५५पत्रे) "पक्षे–अर्द्धमासे भवं पाक्षिकं"इति पाक्षिकस्य पक्षार्द्धं व्याख्यानं, पक्षार्द्धश्च पञ्चदश्यामेवेति, अन्यच्च "तम्मि य दिणे पक्खियपडिक्कमणं साहूणं, तओ संखेण सयगाइसम्मुहं संलत्तं, जहा-अज्ज साहूणं पक्खियं परं अम्हेहि पोसहव्वयं न गहियं"

त्यादि "चाउ भ्म पन्नरसा संधी"इति (२७५पत्रे) नवपद(प्रकरण)वृत्तिवाक्यमपि शंकाधिकारे समनुसरणीयं, न च प्रज्ञप्त्यां यद्यपि पाक्षिकशब्देन परमार्थेन अभयदेवाचार्यैश्चतुर्दशी पञ्चदशी वा न नामग्राहं न्यगमि, तथापि चतुर्थकरणात्पाक्षिकशब्देन चतुर्दश्यैवात्रानुयायत्वे पञ्चदश्यां तु पक्षापत्तिः स्यादिति वाच्यं, तस्य चतुर्दश्यामभक्तार्थकरणे नियमाभावात्, तथात्वस्य तस्मिन् पुरा भोजननिमन्त्रणाभ्युपगमेन भावाऽप्यङ्गीकारात्, तथा च न पक्षतपःप्रसङ्गः, पञ्चदशीपक्षनिक्षिप्तान्यदोषाणां भूतेष्ट(चतुर्दशी)पक्षेऽपि सदृक्षत्वं, तुल्ययोगक्षेमत्वात्, अन्यच्च 'पक्षोऽर्द्धमासो भवं पाक्षिक'मिति व्युत्पत्त्या पञ्चदश्यापत्तिर्जलेपायिता, चतुर्दश्यामर्द्धमासत्वासम्भवात्, तथा "दिवसो पोसहो पक्खो वइक्कंतो"इति पाक्षिकसूत्रे, एतच्चूर्णौ "पोसहो-अट्ठमिचउद्दसीसु उववासकरणं. सेसं कंठं" एतद्वृत्तौ च "दिवसो-दिनं, किं विशिष्टः ? 'पौषधः' पर्वरूपः तथा 'पक्षो'ऽर्द्धमासरूपो व्यतिक्रान्त" इत्येवम्भूतग्रन्थपद्धत्या चतुर्दश्याः पक्षार्द्धपर्वणः पार्थक्याभिधानमपि विभाव्यं, तथा "पक्खियपोसहिएसु, कारेइ तवं सयं करोति य" इति व्यवहारसूत्र(भाष्ये)दशमोद्देशके (४३पत्रे), तद्वृत्तिः "पाक्षिकेऽर्द्धमासपर्वणि, पौषधिकेषु चाष्टम्यादिषु पर्वसु तपः कारयति स्वयमपि करोति चेत्यर्थः"। ननु चतुर्दश्यां पाक्षिककल्पनयाऽन्यस्यां चतुर्दश्यां पक्षान्तो भवत्येवेति विवक्षया सर्वमपि भवदुक्तमस्माभिः प्रत्युक्तमेवेति चेन्न, श्रीजंबूद्वीपप्रज्ञप्त्यां श्रीसूर्यप्रज्ञप्त्यां पञ्चदश्यामेव पक्षान्तश्रवणात्, तथाहि—"एगमेगस्स णं भंते ! पक्खस्स कति दीहा ?, गोयमा ! पण्णरसदिवसा, तं जहा—पडिवादिवसे बीयदिवसे जाव पन्नरसे दिवसे"इति (पत्र १४७) पाठात्, तथा "पाडिवयबीयतइया, चउत्थी तह पंचमी य छट्ठी य। सत्तमिअट्ठमीनवमी, दसमी एक्कारसी चेव ॥१०३॥ बारसितेरसिचाउ-द्दसी य निट्ठवणीया य पन्नरसी। किण्हंमि य जोण्हंमि य, एयाउ तिही मुणेयव्वा ॥१०४॥"इति ज्योतिष्करण्डकवाक्यात् पञ्चदश्यामेव पक्षान्तः, तथा "जा सा चरमा रयणी"इति दशाश्रुतस्कन्धवाक्याच्चामावास्यामेव चरमरजनीत्वमवगम्यं, तथा

"अंतो पक्खस्स"इति पाक्षिकसूत्रे, तद्वृत्तिः "अन्तर्मध्ये 'पक्षस्य' चन्द्राभिधानार्द्धमासस्य मध्ये यत्किञ्चिद्वाचितं" इत्यादि, अत्रापि चन्द्रमासस्यार्द्धे पाक्षिकमुक्तं, चन्द्रमासस्तु पूर्णमास्यामेव स्यात्, यदुक्तं श्रीव्यवहारभाष्ये (प्रथमोद्देशके ६ पत्रे) "नक्खत्ते चंदे य उउ य, आइच्चे य होइ बोधव्वे। अभिवड्डिए य पंचो, पंचविधो कालमासो उ ।१। 'चंदे य'त्ति चन्द्रेण भवश्चान्द्रः युगादौ श्रावणे मासे बहुलपक्ष-प्रतिपद आरभ्य यावत्पूर्णमासी परिसमाप्तिस्तावत्कालप्रमाणश्चान्द्रो मासः, एकपूर्णमासीपरावर्त्तमानश्चान्द्रो मासः" इति तद्वृत्त्येकदेशः, तथा चन्द्रमासार्द्धं पञ्चदश्यामेव, तथा "पञ्चदश्यौ यज्ञकालौ, पक्षान्तौ पर्वणी अपि" तथा "पूर्णिमा पौर्णमासी सा"इत्यादि हेमाचार्य-वाक्याच, ननु "पक्खस्स अट्ठमी खलु, मासस्स य पक्खियं मुणेयव्वं ।"इतिव्यवहारभाष्य(षष्ठोद्देशक)व्याख्याने (४५ पत्रे) "अर्द्धमासस्य-पक्षस्य मध्यं-अष्टमी, सा खलु पर्व, मासस्य मध्यं-पक्षेण निर्वृत्तं पाक्षिकं, तच्च कृष्णचतुर्दशीरूपमवसातव्यं। तत्र प्रायो विद्यासाधनोपचारभावात्" इति श्रीमलयगिरिगिरासाक्षात्पाक्षिकस्य चतुर्दश्यामायातमेवेति चेन्न, अवसरानभिज्ञानात्, तथाहि-"विज्जाणं परिवाडी, पव्वे पव्वे य देंति आयरिया। मासऽद्धमासियाणं, पव्वं पुण होइ मज्झं तु ।२५१।" इत्यनन्तरलिखितव्यवहारभाष्यगाथाप्रामाण्यात् आचार्याणां देवताद्यधिष्ठित-मन्त्रपरावर्त्तनकरणाधिकार एवात्रावगन्तव्यो, न प्रतिक्रमणादिपाक्षिककृत्यकरणावसरः, तथात्वे कृष्णचतुर्दश्यामेव मासमध्यत्वात्पाक्षिकत्वं स्यान्न शुक्लचतुर्दश्यां, तत्र मासपर्यवसानत्वेन मासमध्याभावात्, तन्मध्यस्यैव पाक्षिकत्वेनाख्यानात्, दृश्यते च सर्वगच्छेषु शुक्लचतुर्दश्यामपि तथा व्यवहारस्तेनाङ्गीकुरु पाक्षिकपदमत्राचार्याणां मन्त्रपरावर्त्तनमात्रकृत्यनिवेदकं, परिहर वा शुक्लचतुर्दश्यां पाक्षिकत्वाभिसन्धिमिति लाम-मिच्छतो मूलक्षतिरायातेति ध्येयं, 'पक्षेण निर्वृत्तं पाक्षिक'मिति व्युत्पत्त्याऽत्र चतुर्दश्यां पाक्षिकं न भवेदेव, किन्त्वमावास्यां, परं "तच्च कृष्णचतुर्दशीरूपमवसातव्य"मिति वाक्येन वृत्तिकृता कृष्णचतुर्दश्यामेव पाक्षिकपदमत्रोपचरितं द्रष्टव्यं, तन्मूलन्तु "तत्र प्रायो विद्यासाधनो-

स्याद्भावा"दित्येव दर्शितं, विद्यासाधनोपचारस्तु कृष्णचतुर्दश्यामेव स्यान्न शुक्लचतुर्दश्यां, तथैवाखिलजनप्रतीतेः, अत एव न शुक्लचतुर्दश्यां पाक्षिकमप्यस्त्येव इति, तथा चतुर्दश्यां मासमध्यत्वे पूर्णिमायां च मासपूर्त्तेरारम्भैकस्मिन् पक्षे दिनचतुर्दशकमन्यत्र तत्षोडशकमित्यपि दोषः, तथा चतुर्दश्यां पाक्षिकस्य वास्तवत्वेऽष्टम्यां पक्षमध्यता कर्हिचिदपि न स्यात्, अमावास्यान्तत्वेऽष्टम्यां मध्यता स्यादेव, न च ममाऽपि समानमेतदिति वाच्यं, अस्मदभिप्रायेण पाक्षिकपदं कृष्णचतुर्दश्यां विद्यासाधनोपचारार्थं सङ्केतितमिति नोक्तदोषावकाश इति, अपरं व्यवहारचूर्णिकाराभिप्रायेण "मासस्स मज्झं पक्खियं किण्हपक्खस्स चउद्दसीए विज्जासाहणोवयारो" इत्युक्त्या अमावास्यायां पाक्षिकं स्यात्, कृष्णचतुर्दश्यां तूपचारः, स च पूर्वसेवा भण्यते, जीवानुशासनवृत्तौ (२० पत्रे) श्रीदेवसूरिभिस्तथैव समर्थनात्, तथाहि—"पूज्यास्तु वदन्ति उपचारशब्देन पूर्वसेवाऽत्र भण्यते, ततः कृष्णचतुर्दश्यां पूर्वसेवा नूतनमन्त्रग्रहणजपलक्षणा क्रियते, पाक्षिके च पञ्चदशीलक्षणे परिपाटीः-परावर्त्तनं विधीयते, इत्थं व्याख्याने पञ्चदश्यपि पाक्षिकं स्यात्, परिपाटी च घटते, शुक्लचतुर्दश्यां तु पूर्वसेवा न क्रियते इति सर्वजनप्रतीतं, कृष्णचतुर्दश्यां च सस्फुरो मन्त्रो भवत्यतस्तत्र पूर्वसेवेति" तद्ग्रन्थलेशः तदेवमेवम्भूतबहुशास्त्रसम्मत्या पाक्षिकाणि पञ्चदश्यामेव सङ्गतानीति नीतिः, तथाऽस्मत्परमगुरवः श्रीमदभयदेवाचार्याः "पक्खियचाउम्मासे, आलोयणा नियमसा उ दायव्वे" ति पञ्चदशपञ्चाशकसत्कदशम-गाथावृत्तेर्व्याख्यायां—"पक्षेऽर्धमासे भवं पाक्षिकं पर्व—पञ्चदशी चतुर्दशी वा, चतुर्षु मासेषु भवं चातुर्मासं पर्वैव" इति प्ररूपणात्पाक्षिकं चतुर्दश्यामाचरणया पञ्चदश्यां चागमाभिप्रायेणेति निजगदुरितरथा तैस्तथोद्दिष्टं न भवेत्, युगपद्दिनद्वय्यां पाक्षिकत्वासङ्गतेः, एतदाकूत-निश्चयस्तु श्रीमज्जिनवल्लभसूरिविरचितद्वादशकुलकवृत्तौ (१७ पत्रे) "तदणु गउ च्चिय मग्गो" इति द्वादशगाथाव्याख्यायां "तत्र यदुक्तं कुग्रहस्व-रूपाभिधानप्रस्तावे, यदुत 'पौर्णमास्यामेव पाक्षिकादिप्रतिक्रमण'मिति, तद् यद्यागमोक्तत्वेनाभिधीयते तदा पर्युषणापर्वाऽपि पञ्चम्यामेव विधेयं

न्मात्, अथ तस्य चतुर्थ्यामाचरितत्वेन तच्चतुर्थ्यामेव तर्हि पाक्षिकाद्यपि चतुर्दश्यामेव, यतस्तैरेव गीतार्थैः कालिकाचार्यैश्चतुर्थ्यां पर्युषणानिर्वाहाय चतुर्दश्यामेव तदाचरितं, अन्यथा हि सिद्धान्ताभिहितस्य पञ्चकदशकस्य दशमपञ्चकस्यापरिपूर्त्तौ तच्चतुर्थ्यां न निर्वहेदिति विचारः, तन्निसिद्धमेतत्पाक्षिकादिप्रतिक्रमणं चतुर्दश्यामेव कर्त्तव्यं, गीतार्थाचरितत्वात्, चतुर्थ्यां पर्युषणापर्ववदिति" दिङ्मात्रमिति गाथार्थः ९। अथ सर्वदाऽसदारम्भमग्नानां कुटुम्बव्यापारपारवश्यपङ्कनिमग्नानां भवोद्विग्नानां श्रमणोपासकानां चतुर्दश्यादिपर्वस्वेव पौषधकरणावकाशोऽस्तीति युक्तं तेषां पर्वसु पौषधकरणं, परमन्यदाऽपि सति समवकाशे तद्ग्रहणं समीहितमेवेति सार्वदिकं पौषधग्रहणमायातमिति तन्मतिं प्रतिषेधयन्नाह—

उक्किट्ठसावयाण वि, नियघरवावारविप्पमुक्काणं। पव्वेसु चेव पोसह–पडिमा समयंमि निद्दिट्ठा।१०।

व्याख्या—'उत्कृष्टश्रावकाणामप्या'स्तां मन्दसत्वानामुपासकानां, तेषां कुटुम्बव्यापारभारापसारणेन सर्वदाऽपि तदवकाशसम्भव इत्यपेः सामर्थ्यादायातं, श्रावकाणामपि प्रतिमारूपोत्कृष्टधर्मप्रतिपत्त्योत्कृष्टत्वमवसेयं 'पौषधप्रतिमा'मासचतुष्टयानुष्ठेयविशिष्टपौषधाभिग्रहविशेषः 'समये' सिद्धान्ते 'पर्वस्वेव'चतुर्दश्यष्टम्युद्दिष्टपौर्णमासीलक्षणेषु दिनेषु 'निर्दिष्टा' प्रकाशितोपदेशद्वारेण विधिवादेन श्रुतधरैरिति कर्त्तुरुपस्कारः, किं विशिष्टानां तेषां ? 'निजगृहव्यापारविप्रमुक्तानां' प्राकृतत्वेन विशेषणपरनिपातनात् विप्रमुक्तनिजगृहव्यापाराणां, विप्रमुक्ता इव निःशेषपदभारस्य पुत्रादिषु नियुक्तत्वेन विप्रमुक्तास्त्यक्ता गृहव्यापाराः यैस्ते, तेषां, निजगृहव्यापारविमुखानां हि परगृहव्यापारकरणं दूरापास्तमेवेति करणकारणाभ्यां सावद्ययोगविमुखत्वमिति भावः, अयम्भावः—सावकाशानामुपासकानां यदि सर्वदा पौषधग्रहणं श्रुतधराणामिष्टं भवेत्तदा तैर्विप्रास्थानं प्रतिपन्नपौषधप्रतिमानां तेषां पौषधव्रतमपि नामग्राहं गृहीततिथिषु नोपदिष्टं भवेत्, उपदिष्टं तु पर्वतिथिष्वेवेति, तथाहि—"से णं चाउद्दसऽट्ठमुद्दिट्ठपुण्णमासिणीसु पडिपुण्णं पोसहं अणुपालेत्ता भवति"इति दशाश्रुतस्कन्धे, तथा "पोसहोववासनिरए" त्ति

समवायाङ्गे (१९ पत्रे), तद्वृत्तिः "पौषधोपवासे निरतः-आसक्तः पौषधोपवासनिरतः (स:)सः, एवंविधस्य श्रावकस्य चतुर्थी प्रतिमेति गम्यते, अयमत्र भावः-पूर्वप्रतिमात्रयोपेतस्य अष्टमीचतुर्दश्यमावास्यापौर्णमासीष्वाहारपौषधादिचतुर्विधं पौषधं प्रतिपद्यमानस्य चतुरो मासान् यावच्चतुर्थी प्रतिमा भवतीति" तथा "पोसहत्ति-पोसहपडिमा तस्सरूवमिमं-पुव्वोइयपडिमजुओ, पालेइ जो पोसहं तु संपुण्णं । अट्ठमि-चउद्दसाइसु, चउरो मासा चउत्थि सा ।१। आइमहाओ पुण्णिमाऽमावसाओ घेप्पंति" इति पञ्चाशकचूर्णौ तद्वृत्तौ उपासकदशावृत्तौ च, तथा "होइ चउत्थी चउद्दसि, अट्ठमिमाइसु (दियहेसु) पव्वेसु" इत्यावश्यकबृहद्वृत्तौ (६४७ पत्रे) तच्चूर्णौ च, तथा "अट्ठमीमाइपव्वेसु, सम्मं पोसहपालणं । सेसाणुट्ठाणजुत्तस्स, चउत्थी पडिमा इमा ।१। व्याख्या-'अष्टम्यादिपर्वसु' चतुर्दशीपूर्णिमाऽमावास्यालक्षणेषु" इति ठाणाङ्गवृत्तौ, एवं सर्वत्र पर्वस्वेव पौषधग्रहणं प्रतिमाप्रतिपन्नानां श्रुतधरैर्दर्शितं, तेषां च सावकाशत्वं सर्वसम्मतमेव, तथाच निरवकाशानामिव सावकाशानामपि पर्वस्वेव पौषधाङ्गीकार इत्यङ्गीकार्यमिति तात्पर्यार्थः ।१०। ननु यथा तृतीयश्राद्धप्रतिमां प्रतिपन्नस्य श्रमणोपासकस्य सामायिककारिणः श्रीसमवायाङ्गवृत्तौ (१९ पत्रे), "तत्रैवमप्रतिपन्नपौषधस्य दर्शनव्रतोपेतस्य प्रतिदिनमुभयसन्ध्यं सामायिककरणं मासत्रयं यावदिति तृतीया प्रतिमे"ति वचनात्, तथोपासकदशावृत्तौ (१५ पत्रे) "वरदंसणवयजुत्तो, सामाइयं कुणइ जोउ संझासु । उक्कोसेण तिमासं, एसा सामाइयपडिमा ।१।" इति पाठाच्च श्रीमदभयदेवाचार्यैः सन्ध्यासमये सामायिकग्रहणमादिष्टं, परमन्यदा तद्ग्रहणनिषेधाप्ररूपणेन 'निषिद्धमनुमत'मिति न्यायादुक्तकालादन्यदाऽपि तत्करणं तेषां शास्त्रान्तरसम्मत्याऽनियततया अनुमतमेव, तथा नियमितदिनेषु तन्नैयत्येनान्यदा तत्करणप्रतिषेधाप्ररूपणादन्यदिनेष्वप्यनियततया तदुपादेयमिति युक्तिं नियमितदिनान्यदिनेषु पौषधग्रहणनिषेधकशास्त्रसम्मतिप्रदर्शनेनापाकुर्वन्नाह-

तस्सावस्सयतत्तत्थ-सावगपण्णत्तिगंथवित्तीसु । पंचासगचुण्णीए, पइदिणकरणे निसेहो वि ।११।

व्याख्या–'आवश्यकतत्त्वार्थश्रावकप्रज्ञप्तिग्रन्थवृत्तिषु' आवश्यकं च तत्त्वार्थश्च श्रावकप्रज्ञप्तिग्रन्थश्च आवश्यकतत्त्वार्थश्रावकप्रज्ञप्तिग्रन्थास्तेषां या वृत्तयस्तास्तथा, तासु, पञ्चाशकचूर्णौ च 'तस्ये'ति पौषधव्रतस्य 'प्रतिदिनकरणे' प्रतिवासरं विधाने 'निषेधोऽपि' न केवलं तस्य प्रतिनियतदिवसेषु विधानमेव न्यवेदि, प्रत्युत प्रतिदिवसविधाननिषेधोऽपि समुपनिबद्धः, इत्यपि सामर्थ्यसमर्थितोऽर्थः, वर्त्तते इत्यनुवर्त्तनीयं, तत्रावश्यकवृत्तिर्यथा–"एत्थ समणोवासगधम्मे पंच अणुव्वयाइं तिन्नि गुणव्वयाइं आवकहियाणि, चत्तारि सिक्खावयाणि इत्तरियाइं" इत्यावश्यकसूत्रं (८३८ पत्रे), अस्य व्याख्या–"अत्र पुनः श्रमणोपासकधर्मे, पुनः शब्दोऽवधारणार्थः, अत्रैव, न शाक्यादिश्रमणोपासकधर्मे. सम्यक्त्वाभावेनाणुव्रताद्यभावादिति, वक्ष्यति च 'एत्थ पुण समणोवासगधम्मे मूलवत्थु सम्मत्त'मित्यादि, पञ्चाणुव्रतानि–प्रतिपादितस्वरूपाणि त्रीणि गुणव्रतानि–उक्तलक्षणान्येव, यावत्कथिकानीति–सकृद्गृहीतानि यावज्जीवमपि भावनीयानि, चत्वारीति संख्या, शिक्षापदव्रतानीति शिक्षा अभ्यासस्तस्य पदानि–स्थानानि, तान्येव व्रतानि शिक्षापदव्रतानि, इत्वराणीति, तत्र प्रतिदिवसानुष्ठेये द्वे सामायिकदेशावकाशिके पुनः पुनरुच्चार्ये इति भावना, पौषधोपवासातिथिसंविभागौ तु प्रतिनियतदिवसानुष्ठेयौ, न प्रतिदिवसाचरणीयाविति" (८३९ पत्रे), तथा "दिग्देशानर्थदण्डविरतिसामायिकपौषधोपवासोपभोगपरिभोगपरिमाणातिथिसंविभागव्रतसम्पन्नश्च (त०अ०७–सू०१६), व्याख्या–कृतद्वन्द्वा दिगादयस्तैः 'सम्पन्नः' समृद्धः–संयुक्तः, चः शब्दः समुच्चयवचनः, प्रतिपन्नाणुव्रतस्यागारिणस्तेषामेवाणुव्रतानां दार्ढ्योपादनाय शीलोपदेशः, शीलञ्च गुणशिक्षाव्रतमयं, तत्र गुणव्रतानि त्रीणि–दिगुपभोगपरिभोगपरिमाणानर्थदण्डविरतिसंज्ञान्यणुव्रतानां भावनाभूतानि, यथाऽणुव्रतानि तथा गुणव्रतान्यपि सकृद्गृहीतानि यावज्जीवं भावनीयानि शिक्षापदव्रतानि–सामायिकदेशावकाशिकपौषधोपवासातिथिसंविभागाख्यानि चत्वारि, प्रतिदिवसानुष्ठेये द्वे सामायिकदेशावकाशिके, पुनः पुनरुच्चार्येते इति यावत्, पौषधोपवासातिथिसंविभागौ तु प्रतिनियतदिवसानुष्ठेयौ,

न प्रतिदिवसं समाचरणीयौ, पुनः पुनरष्टम्यादिपर्वतिथिष्वनुष्ठीयेते" इति तत्त्वार्थवृत्तिः (द्वितीयविभागे ८८ पत्रे), तथा "तत्र प्रतिदिवसानुष्ठेये द्वे सामायिकदेशावकाशिके पुनः पुनरुच्चार्ये इति भावना; पौषधोपवासातिथिसंविभागौ तु प्रतिनियतदिवसानुष्ठेयौ, न प्रतिदिवसाचरणीयाविति" (पृष्ठ १८२) श्रावकप्रज्ञप्तिवृत्तिहारिभद्रीया, तथा "एत्थ उ सावगधम्मे, पायमणुव्वयगुणव्वयाइं च। आवकहियाइं सिक्खावयाइं पुण इत्तराइं ति ।१९।" पञ्चाशकसूत्रं, "व्याख्या–'एत्थ'त्ति पुव्वभणिए 'तु'सद्दो विसेसं करेइ, तहाहि–जइ धम्मे महव्वयाणि आवकहियाणि चेव भवंति, एत्थ पुण सावगधम्मे पायमणुव्वयाणि य गुणव्वयाइं च जावज्जीवियाणि भवंति, पायगहणाओ पुण चाउम्मासाइकालपमाणेण वि भवंति, सिक्खावयाणि पुण 'इत्तरियाणि' अप्पकालियाणि, तत्थ पइदिवसाणुट्ठेयाणि सामाइयदेसावगासियाणि, पुणो पुणो उच्चारिज्जंति त्ति भणियं होइ, पोसहोववासअतिहिसंविभागा पुण पतिनियतदिवसाणुट्ठेया, न पइदिवसाणुट्ठेया" इति पञ्चाशकचूर्णिः, एवं पञ्चाशकवृत्तिः (३० पत्रे) श्रीश्रीचन्द्रसूरिकृतपदावश्यकवृत्तिरपि, तदेवमेवम्भूतप्रभूतग्रन्थपद्धतिपर्यालोचनेन पर्वान्यदिनेषु पौषधप्रतिषेध एवायाति, न च सामायिकव्रतस्योभयकालादृते करणनिषेधः क्वाप्यागमे समुपलब्धः, प्रत्युत (उत्तरार्धे ३०२ पृष्ठे) "जाहे खणिओ ताहे करेइ तो से न भज्जइ" इत्यावश्यकचूर्णिवक्तव्यतया ऋद्धिप्राप्तानृद्धिप्राप्तोपासकानां साधोः समीपे चैत्यगृहादिषु सामायिकग्रहणाक्षरोपलम्भाच्चान्यदाऽपि तदङ्गीकारः शास्त्रकारैः प्रादुरकारि, न च प्रतिक्रमणस्योभयकालसमाचरणीयतया तत्सहगतत्वेन सामायिकस्याप्युभयकालकरणीयत्वमायातमिति वाच्यं, "आवासयं कुणंतो नियमा करेइ" तथा "जत्थ वा निव्वावारो अच्छइ तत्थ सव्वत्थ करेइ सामाइयं" तथा "सामाइयं वा आवासयं वा करेइ" तथा "पच्छा सो इड्ढिपत्तो सामाइयं काउण पडिक्कंतो वंदित्ता पुच्छति" इत्यावश्यकचूर्णिप्रसरीरावश्यकादूभिन्नस्यापि सामायिकस्य करणमनुसरणीयमिति बहुवाच्यमत्र ध्येयं, यस्तु(अर्थदीपिकाख्यायां श्राद्ध)प्रतिक्रमण-

सूत्रवृत्तौ (१६५ पत्रे) रत्नशेखरसूरिणा "ननु 'पौषधोपवासातिथिसंविभागौ तु प्रतिनियतदिवसानुष्ठेयौ, न प्रतिदिवसाचरणीयौ' इति श्रीहारिभद्रीयावश्यकबृहद्वृत्तिश्रावकप्रज्ञप्तिवृत्त्यादौ च साक्षादुक्तस्तन्निषेध इति चेत् ? अहो !! ग्रन्थकाराभिप्रायाभिज्ञता भवतः, नहीदं वचनं पर्वान्यदिनेषु पौषधनिषेधपरं किन्तु पर्वसु पौषधकरणनियमपरं, यथाऽऽवश्यकवृत्त्यादौ श्राद्धपञ्चमप्रतिमाऽधिकारे 'दिवैव ब्रह्मचारी, न तु रात्रौ' इति वचनं दिवसे ब्रह्मचर्यनियमार्थं, न तु रात्रौ ब्रह्मचर्यनिषेधार्थं, अन्यथा पञ्चमप्रतिमाऽऽराधकश्राद्धेन रात्रावब्रह्मचारिणैव भाव्यमिति पापोपदेश एव दत्तः स्यात्" इत्याद्यक्षरैराक्षेपपूर्वकः परिहारः प्रकटितोऽस्ति, सोऽप्यविचारितकमनीयस्तद्यथा-न तावद्वयमावश्यकबृहद्वृत्त्यादाविमं पाठं भवदुक्तमुपलब्धवन्तो, येन किमपि विचारयामः, अतः कथमिवैतदृष्टान्तेन तत्र तदर्थसाधनं साधीयः स्यात् ?, विना वोढारं विवाहोपकरणमेलक इव प्रस्तुतोपहास्यनिबन्धनं, तदस्तित्वेऽपि नैतयोर्निषेधयोः साम्यं, तत्र तु "न प्रतिदिवसाचरणीया" विति पाठोऽत्र तु "न तु रात्रा" विति पाठः, यदि "रात्रौ न ब्रह्मसमाचरणीय" मिति पाठस्तत्र स्यात्तदा साम्यमपि द्वयोर्निषेधयोः स्यात्, न च तथा पाठोऽस्ति, तत्र तु (६४७ पत्रे) "दिया बंभयारि राती-परिमाणकडे अपोसहिए। पोसहिए रत्तिंमि य, नियमेणं बंभयारी य।५।" इत्येवम्भूतः पाठोऽस्ति, तथा च न काऽपि क्षतिः, अपरं तथात्वे "पव्वेसु पज्जोसवियव्वं. नो अपव्वेसु" इत्यादौ निशीथचूर्णिकर्तुरपि पुण्यविघातभियाऽपर्वण्यपि पर्युषणाकारित्वमनुमास्यते, न चैतत्सङ्गतमिति, तस्य पूर्वपक्षोत्तरपक्षसन्दर्भः कुशकाशावलम्बनप्राय एवेति मन्तव्यं इति गाथार्थः।११। ननु भवतु तावदेतेषु ग्रन्थेषु नियमितदिनकर्त्तव्यता अन्यदिनेषु च निषेधः पौषधस्य परं चरितानुवादानुवृत्त्या नन्दमणिकारोदायननृपतिनायकयोः पर्वान्यदिनेष्वपि पौषधप्रवृत्तिः श्रूयते सच्छ्रावकजनविहितधर्मकार्यत्वेन च श्रुतमूलकत्वमप्यनुमास्यते तस्याः, तथाच पर्वान्यदिनेष्वपि तत्करणमायातमित्यारेकातिरेकतां निरस्यन्नाह-

णाए नंदस्स उदा-यणस्स पण्णत्तिए ण पण्णत्तं । जइवि य पव्वत्ति पयं, पर्यापियं तहवि अन्नत्थ ॥१२॥

व्याख्या-यद्यपि च: पुनरर्थे [illegible] च भिन्नक्रमः, उदायनस्येत्यत्र योक्ष्यते, 'ज्ञाते' इति पदैकदेशे पदसमुदायोपचारात् ज्ञाताधर्मकथाङ्गे 'ज्ञाताङ्ग' इत्यत्रासौ मणिकाराध्ययनोपाङ्गकस्य 'उदायनस्य' च वीतभयाधीशितुः श्राद्धस्य 'प्रज्ञप्त्या'मिति[1] "एकदेशविकृतमनन्यव"दिति न्यायेन व्याख्याप्रज्ञप्त्याभिधानपञ्चमाङ्गाभिधाने 'पर्व इति पदं' पर्वमरूपकवर्णसमूहात्मकं 'न प्रज्ञप्तं' न प्ररूपितं गणधरैरित्यध्याहार-स्तथापि गीतार्थैरन्यदभिप्रायानुसारेण 'प्रकाशितं' काकिकनलिकान्यायेन मध्यस्थपर्वपदस्याग्रेऽप्यभिसम्बन्धात् पर्वपदमत्रापि कर्मतया योज्यं, 'अन्यत्र' ग्रन्थान्तरेष्विति तात्पर्यः, भावार्थस्त्वयं-"तएणं नंदे मणियारसेट्ठी अण्णया गिम्हकालसमयंसि जेट्ठामूलंसि मासंसि अट्ठमभत्तं परिगिण्हइ २ त्ता पोसहसालाए जाव विहरति" इति ज्ञाताधर्मकथायां त्रयोदशाध्ययने (१७८ पत्रे) यद्यपि 'पर्वं' इति पदं नास्ति तथापि "पर्वदिवसम्मि कम्मि, अट्ठमभत्तं पगिण्हई नंदो । पोसहसालं पविसइ, पोसहमादाय वट्टइ य ॥१॥"इति श्रावकप्रतिक्रमणचूर्णौ साक्षी-[illegible]नन्दमणिकारस्य पर्वदिने एव पौषधप्ररूपणं, तथोदायनस्यापि "तएणं से उदायणे राया अन्नया कयाइ पोसहसालाए"इत्यादितात्पर्योक्त्या प्रज्ञप्त्यां (६१८ पत्रे) यद्यपि पर्वपदं न प्रत्यपादि तथापि प्राकृतप्राकृतोत्तराध्ययन-चूर्णौ "तएणं से उदायणे राया अन्नया कयाइ पोसहसालाए पोसहिए एगे अबीए पक्खियं पोसहं पडिजागरमाणे विहरइ"इति वाक्येन पाक्षिकाणां पर्वभूतानां पौषधः समुद्बोधितो बुधैः, एवमन्येष्वपि प्राक् प्रपञ्चितशास्त्रेष्वन्वेष्यमिति, तथा च नन्दोदायनयोरपि उक्तग्रन्थ-न्यायेन पर्वणोः पौषधप्ररूपणं, किन्न न श्रुतं ? महता धर्मकीर्त्युपाध्यायस्य "कइयावि पक्खियं, पोसहं निवो लेइ वीयभयसामी ।

१ "वीभो-भोगीभ-इति पदस्यैकदेशे समुदायोपचारात् व्याख्याप्रज्ञप्त्या" इति प्रत्यन्तरे ।

रयणीइ चरमजामे, मुहलेसो इय विचिंतेई ।८०।'' इतिवाक्यं स्वोपज्ञसङ्घाचारवृत्तौ, येनैवमाक्षिप्तवानिति दिक् ।१२। नन्वास्तां नन्दो-दायनयोरुक्तव्यवस्थया पर्वतिथिषु पौषधग्रहणं, परं नन्दकृतदिनत्रयात्मकपौषधस्यापर्वण्येव निष्ठा समभूत्ततो मधुनि विषसम्पृक्ते मधुनो विषपक्षनिक्षेपोपाख्यानेनेदमस्मदुपन्यस्तनन्दोदाहरणमस्यापि बाधावहमेवेति विवक्षोर्वासनां निर्वासयन्नाह-

अण्णत्थ कयचउद्दसि-रयणीपोसहवयस्स नंदस्स । तिण्हावुत्तेत्ति तओ, पव्वेच्चिय तस्स निठ्ठा वि ।१३।

व्याख्या-'अन्यत्र' पुनः शास्त्रान्तरे यद्यपि श्रावकप्रतिक्रमणचूर्णौ ''तइयदिणे रयणीए तस्स ति(ण्हा)स्सा दुस्सहा कहवि जाया'' इति वाक्येन स्थूलन्यायेन पर्वदिनगृहीतपौषधात्पर्वापर्वविवेकताविधुरे तृतीयदिने पिपासा तस्य प्रादुरासीदिति विन्यस्तं, तथापि पञ्चाधिकैकादशशतमितसंवद्वर्तमानोकेशगच्छीयककुदाचार्यसन्तानीयोपाध्यायश्रीयशोदेवकृतायां नवपदप्रकरणवृत्तौ (८४ पत्रे) ''अन्यदा च त्रैलोक्यबान्धवे भगवति सिन्धुविषयमुदायनराजश्रावकस्य प्रव्राजनार्थं गतवति नन्दमणिकारश्रावको ग्रीष्मचतुर्दश्यां पौषधिको बभूव, अस्तङ्गते रवौ विहितः सायन्तनसन्ध्याऽऽवश्यकविधिर्धर्मध्यानरतस्य चास्य कस्यांश्चिद्वेलायां पिपासा वेदना प्रादुरभूत्, ततस्तया बाध्यमान-श्चिन्तयामासे'' ति वाक्येन 'नन्दस्य' नन्दमणिकारस्य कृतचतुर्दशीरजनिपौषधव्रतस्य 'तृषा' पिपासा 'उक्ता' प्ररूपिता, उपलक्षणाद्बुभुक्षाऽपि, 'तत' स्तस्माद्धेतोः पर्वण्येव 'तस्य' पौषधव्रतस्य 'निष्ठाऽपि' परिपूर्णत्वं समभूत्, तथाच 'नन्दस्य' पर्वण्येव पौषधग्रहणनिष्ठे समुपदिष्टे, इति सर्वं सुस्थमिति गाथार्थः ।१३। ननु भिन्नकर्तृकग्रन्थद्वयसम्मत्या पौषधत्रयस्यादावन्ते च पर्वदिने प्रत्येकं साधुसन्दर्शिते मध्यस्थदिनस्याद्यापि पर्वत्वे किञ्चित्प्रष्टव्यमप्यस्ति, परं चतुर्दशीदिनात्पूर्वपर्वाभावात् तृतीयपौषधस्य चतुर्दश्यां समाप्तिः पर्वणि च प्रारम्भ इति महद्वैपरि-त्यमाभाति, तेनोभयोरपि शास्त्रकारयोरन्योऽन्यं संवादिता विसंस्थुलेति, कथमेतयोः समाधानमाधेयमिति पूर्वपक्षिसत्कमाक्षेपं परिहरन्नाह-

**तत्थ अभत्तदुगं सो, पुव्वमपव्वेसु कासि पव्वदिणे । पोसहवयं ति नज्जइ, पुव्विं पव्वस्सऽणुवलंभा ।१४।**

व्याख्या–'तत्रे'ति पूर्वोक्तप्रश्ने प्रतिविधीयते इति योज्यं, 'स' नन्दमणिकारः 'पूर्वे'मिति पर्वदिनापेक्षया पुरा 'अपर्वणो' पर्वव्यतिरिक्तदिनयोः 'अभक्तद्विक'मुपवासद्वयमकार्षीत्, पर्वदिने तृतीये पौषधव्रतमकार्षित्, इति 'विज्ञायते'ऽवगम्यते, तत्र हेतुमाह–पूर्वं पर्वणो 'अनुपलम्भात्' अनुपलब्धेः, अयम्भावः–नवपदप्रकरणविवरणकारेण चतुर्दश्यां पौषधव्रतं पिपासा च दर्शिता, प्रतिक्रमणसूत्रचूर्णिकृता तु पर्वणि पौषधग्रहणं तृतीयदिने पिपासेति प्रोक्तं, ततश्चतुर्दशीतः पूर्वदिनद्वये पर्वान्तरस्याभावात्. सति पर्वणि पूर्वपौषधकल्पनेति. समधिगम्यते च प्रतिक्रमणचूर्णिकृतोऽपि तिथिनामग्रहणाभावेऽपि पर्वण्येव पौषधग्रहणमभिमतमिति, पर्वं तु नवपदवृत्तिकृता चतुर्दशीति नामग्राहं गृहीतं, ततः पर्वापर्वविचारविधुरं उपवासद्वयं. अष्टमान्यथाऽनुपपत्त्या. पूर्वं कृता चतुर्दशीपर्वणि पौषधव्रतं तेन कृतमिति, तथाच मध्यमदिने पर्वापर्वविचारणाऽपि दत्तमत्युत्तरा, तृतीयदिनोदन्या(तृषा)निरूपणन्तु उपवासद्वयानुविद्धचतुर्दशीरूपतृतीयदिनापेक्षया मन्तव्यमिति युक्तिलेशः, तथाचास्मत्पक्षः श्रीजिनपालो(श्रीप्रबोधचन्द्रो)पाध्यायाः सन्देहदोलावलीबृहद्वृत्तौ (५८ पत्रे) "जेट्ठामूलमासंसीति-ज्येष्ठपूर्णिमायामष्टमे भक्ते तृतीयदिवसे पर्वण्येव त्रिदैवसिके प्रतिमान्त्यरात्री कायोत्सर्गवत् पौषधस्य सम्भवात् कथं नन्दमणिकारस्य दृष्टान्तेन पौषधस्यापर्वानुष्ठानता ?" इति ध्येयं, न च भवत्पूर्वजैः सह नवपदवृत्तिकृतः पूर्णिमाचतुर्दशीदिनकृतपौषधत्वे महान् विरोध इति वाच्यं, उभयत्रापि पर्वदिनत्वसाधर्म्यादविरोध एवेति गाथार्थः ।१४। ननु तेषामियं मतिः सुन्दरैव, परं प्रतिक्रमणचूर्णिशास्त्रे पौषधग्रहणदिनात्तृतीयदिने तृषा प्रतिपादिता, उपवासद्वयापेक्षया तृतीयदिनत्वं तु काल्पनिकं, तेन नवपदवृत्तिकृदुक्तचतुर्दशीदिनाविपर्यासेन पर्वदिनत्रयपुरस्सरं काचित्पौषधव्यवस्था विधेयेति परोक्तं परोक्त्या समर्थयन्नाह–

**जेट्ठामूले बारसि–दिणाओ सव्वाणि जेण पव्वाणि । पव्वेसु तेण पोसह–गहणं तस्सासि इय अन्ने ।१५।**

व्याख्या–'अन्ये' इति केचन विवेचका इति आहुरित्यध्याहार्यः 'तस्ये'ति नन्दमणिकारस्य 'तेन' हेतुना पौषधग्रहणं पर्वसु 'आसीत्' बभूव "यत्तदो(र्नित्याभि)सम्बन्धात्" तेनेति कुतः ?, 'येन' कारणेन 'ज्येष्ठामूले' ज्येष्ठमासे द्वादशीदिनात्सर्वाणि पर्वाणि सन्ति, शास्त्रसम्मत्या कल्याणकानामपि पर्वरूपत्वात्, अयमत्र भावः–चतुर्दश्यपेक्षया पुरा दिनद्वयी द्वादशीत्रयोदशीरूपा, ततो 'ज्येष्ठामूलमासे' ज्येष्ठसितपक्षे द्वादश्यां श्रीसुपार्श्वस्य जन्म त्रयोदश्याञ्च श्रीसुपार्श्वदीक्षा चतुर्दशी तु पर्वैवेति पर्वत्रयं स्थितं, तथाच द्वादश्यां पौषधशालिकारात् घूर्णिकाराभिप्रायेण पर्वणि पौषधग्रहणं त्रयोदश्यां पर्वभूतायां द्वितीयं चतुर्दश्यां तृतीयं पौषधग्रहणं. नवपदवृत्त्यभिप्रायेण रात्रौ च तृपातिरेकः, इति नैकोऽपि दोषः, न चैकादश्यां पर्वत्वेन प्रसिद्धायां प्रथमपौषधग्रहणं. द्वादश्या अवमतिथित्वेन त्रयोदश्यां द्वितीयं. चतुर्दश्यां पर्वत्वेन तृतीयं तदिति द्वयोरपि शास्त्रयोः समं समाधानमिति वाच्यं, ज्येष्ठे सिद्धान्ताभिप्रायेणावमतिथेरेवाभावात्, "सति धर्मिणि धर्मचिन्ते"ति न्यायात्कथं द्वादश्या असत्त्व(अवमत्व)मायातं ?, तथाहि–"भद्दवयकत्तियपोसे, फग्गुणवइसाहमासआसाढे । एयाउ पडंति तिही, नूणं एएसु मासेसु ।१।" इति ज्योतिष्करण्डकवाक्यप्रामाण्यात्, तथाच नैतत्समाधानं साधीय, इति सर्वं समञ्जसं ।१५। ननु नन्दमणिकाराधिकारे पर्वदिनानुगता पौषधव्यवस्था सा(धु)ध्वी व्यवस्थापिता, परं विपाकश्रुतोपश्रुतसुखविपाकीयाद्याध्ययनाधीतसुबाहोः पौषधत्रये किमालम्बनमालम्बनीयमिति विवक्षुं पूर्वपक्षिणं शिक्षयन्नाह–

**तहय सुबाहू चाउ–द्दसाइपव्वेसु अण्णया कासी । अट्ठमजुओ य पोसह–मिय वुत्तं सुहविवागम्मि ।१६।**

व्याख्या–'तथाचे'ति पुनर्यथा नन्दोदायनौ तथा सुबाहुरपि 'चतुर्दश्यादिपर्वसु' चतुर्दश्यष्टम्युद्दिष्टपौर्णमासीरूपोत्सवदिनेषु 'अन्यदा'

कस्मिन्श्चित्काले 'अष्टमयुतः' अष्टमेन–समयसंज्ञयोपवासत्रयेण युतः सहितः, प्रत्याख्याताष्टमतपा इत्यर्थः, 'पौषधं' पौषधव्रतं 'अकार्षीत्' पकार इति 'सुखविपाके' सुखविपाकीयप्रथमाध्ययने 'उक्तं' कथितमिति, तथाहि "ततेणं से सुबाहुकुमारे अण्णया कयाई चाउद्दसऽट्ठ-मुद्दिट्ठपुण्णमासिणीसु जेणेव पोसहसाला तेणेव उवागच्छइ २त्ता पोसहसालं पमज्जइ २त्ता उच्चारपासवणभूमिं पडिलेहेइ २त्ता दब्भसंथारं संथरइ २त्ता दब्भसंथारं दुरूहति २त्ता अट्ठमभत्तं पगिण्हति २त्ता पोसहसालाए पोसहिए अट्ठमभत्तिए पोसहं पडिजागरमाणे २ विहरइ" इति सुखविपाकीयाद्याध्ययने (९१ पत्रे), तथाच सिद्धान्ते सुबाहुकुमारस्यापि पर्वदिने एव पौषधग्रहणमुपदिष्टमिति भावः ।१६। ननु समर्थितमेवतत्तस्य पर्वदिने पौषधग्रहणं, परमग्रेतनदिनद्वये का पौषधग्रहणव्यवस्थेति असाधितायां दिनद्वयव्यवस्थायां तत्साधितमप्यसाधितमपि, व्यभिचारसाङ्कर्यात्, इति पूर्वपक्षिविवक्षायां तद्व्यवस्थामाह–

तत्थ य परंपराए, सव्वेसिं धम्मगच्छगीयाणं । एगदिणाओ पुरओ, पोसहगहणं पुणोऽणुमयं ।१७।

व्याख्या–'तत्र चे'ति पौषधदिनद्वयपर्वव्यवस्थायां 'परम्परायां' शिष्यप्रशिष्यादिप्रणालिकारूपायां 'सर्वेषां' समस्तानां 'धर्मगच्छगीतानां' धर्मप्रधानाः–न तु कदाग्रहग्रस्ताः–ये गच्छाः–साधुसमुदायरूपास्ते धर्मगच्छास्तेषु ये गीताः–गीतार्थाः–सूत्रार्थविदस्ते तथा, तेषां धर्मगच्छगीतानां 'एकदिनात्' एकस्माद्दिनात्पुरतः बहुपौषधकर्तॄणां 'पुनः पौषधग्रहणं' द्वितीयादिदिनेषु पुनः पौषधाचरणं 'अनुमतं' वांछितं–इष्टमिति यावत्, अयम्भावः–पौषधत्रयं विधित्सुर्दिनमेकं पौषधं कृत्वा पुनर्द्वितीये दिने पौषधं पुनस्तृतीयेऽह्नि पौषधं विदधाति, न तु सकृद्गृहीतं दिनत्रयादिकमनुवर्त्तयतीति सर्वगच्छीयगीतार्थानामभिमतं, सामायिकस्योत्कृष्टतोऽप्यष्टप्रहरावस्थितेरेव सर्वसम्मतत्वात्, "यदुक्तं सामायिकाधिकारे 'जाव नियमं पज्जुवासामि' इति, नियमश्च जघन्यतो मुहूर्त्तमानः, उत्कृष्टतो अहोरात्रमानकालः" इति श्रीश्रीचन्द्र-

सूरिकृतप्रतिक्रमणसूत्रवृत्तौ, पौषधस्तु सामायिकावियुतः, तत्समाप्तौ च तस्यापि समाप्तेः, तेनैकदिनमेव पौषधोच्चारावस्थितिः, द्वितीयदिने तु पुनरप्युच्चारे कृते एव स्यान्नेतरथेति दिक् ।१७। ननु कथमेवमवसितमिति मतिभ्रान्तिं निरसिसिषुराह—

देवसियाहोरत्तिय-रत्तियभेएहि पोसहो तिविहो । जं उच्चारेंति नवा-ऽहोरत्तदुगाइमाणेणं ।१८।

व्याख्या-'जमि'ति यस्मात्कारणात् 'पौषधः' पौषधव्रतं 'दैवसिकाहोरात्रिकरात्रिकभेदेन' दिवसे भवो दैवसिक, अहश्च रात्रिश्च अहोरात्रं, अहोरात्रेण निर्वृत्तः अहोरात्रिकः, रात्रौ भवो रात्रिक, दैवसिकश्चाहोरात्रिकश्च रात्रिकश्च दैवसिकाहोरात्रिकरात्रिकास्ते च ते भेदाश्च ते तथा, तैस्त्रिविध उच्चारयन्ति सर्वेऽपीति शेषः, 'नवे'ति नैव 'अहोरात्रद्विकादिमानेन' अहोरात्रस्य द्विकं अहोरात्रद्विकं, तदादियन्माने तेन अहोरात्रद्विकादिमानेन, अयम्भावः-शास्त्रेऽपि पौषधे त्रैविध्यमेव, तथाहि-"पडिपुण्णं पोसहं सम्मं अणुपालेइ"त्ति-प्रतिपूर्णं इत्यहोरात्रं यावत्" इति तृतीयाङ्गे तृतीयाश्वासाधिकारे (२३७ पत्रे), अन्यत्राप्येतत्पदव्याख्यायामयमेवार्थः, तथा चोत्कृष्टपौषधस्याहोरात्रमानतैवोक्ता, तथा "पोसहं दुहओ पक्खं, एगरायं न हावए" इत्यत्र "रात्रिग्रहणं च दिवा व्याकुलतया कर्तुमशक्नुवन् रात्रावपि पोषधं कुर्यात्" इत्युत्तराध्ययनवृत्त्यभिप्रायाद्रात्रिपौषधस्यापि ग्रहणं सङ्गृहीतं, एतत्पदापेक्षया सर्वगच्छव्यवस्थया दिवसपौषधग्रहणमपि ध्येयं, एवञ्च सर्वैर्गीतार्थैर्दैवसिकादिभेदेन त्रिधा पौषधव्रतमुच्चार्यते, न च दिनद्वयादिप्रतिबद्धं तत्केनापि श्रुतेन बोध्यते नापि केनापि साध्यते इति भावार्थः ।१८।

ननु साम्प्रतं युगपरम्परया पौषधस्य युगपद्दिनद्वयत्रयाद्युच्चार्यता नोपादेया तदानीन्तु तथा समुपादेया भविष्यतीति यद्भविष्यवाच्यं दूषयन्नाह—

संपइ परंपराए, जइ जुगवं तं वयं न गहियव्वं । ता नूणं पव्वोच्चिय, पोसहगहणं मयं तस्स ।१९।

व्याख्या-'साम्प्रतं' जीतव्यवहारव्यवहरणावसरे 'परम्परया' पूर्वाचार्यादिक्रमेण 'तद्व्रतं' प्रस्तावात्पौषधाख्यं 'युगपदे'ककालं दिन-

यथ्यादितया न 'ग्रहीतव्यं' नाङ्गीकार्यं, 'यदी'ति पूर्वपक्षपक्षोद्बोधः, पूर्वन्तु तद्युगपद्ग्राह्यमासीदेवेति हृदयं, 'ता'तर्हि 'नूनं' निश्चितं पर्वण्येव पौषधग्रहणं 'तस्य' सुबाहो'र्मत'मभीष्टं। अयम्भावः–यदीदानीमेव तद्द्वयाद्युपादानवैधुर्यं तदा तवाभिप्रायेण तदानीं तदानीन्तनो-पासकानां तथैव तदासेव्यमासीदित्यायातं, तथाच स्वमुखेनैव सुखेन देवानुप्रियेण भवता पर्वण्येव तस्य पौषधग्रहणं सम्मानितं, अपर्वणि तद्ग्रहणनिषेधश्चायातः, एवञ्चानायासेन सिद्धं नः समीहितं, अस्माभिरपि पौषधस्यापर्वणि ग्रहणमेव निषिध्यते, न तु पौषधिकस्यापर्वण्य-वस्थानमपि, साम्प्रतं तथा व्यवहारात्, भवताप्यपर्वणि पौषधग्रहणं साध्यते, न तु पौषधिकस्यापर्वण्यवस्थानमपि, सिद्धसाधनात्, तथा-पीष्टापत्तिरस्माकं, परं पूर्वाचार्यपरम्परयोर्विरोधो दुर्द्धरः, सम्प्रदायस्यापि शास्त्राचारानुयायित्वादिति तत्त्वं ।१९। नन्वस्य युगपत्पौषधग्रहणे पूर्वोक्तदोषोद्भावनाद् भिन्नभिन्नपौषधत्रयग्रहणे च शास्त्रसम्मत्यभावात्सूत्रे च "पोसहं पडिजागरमाणे विहरइ" इति पाठेन 'पौषध'मित्यनेनैक-(वचनेनैक) प्रतबोधाच्चत्रित्वं दुरुपपादं, इति "इतो दंदशूक इतोऽन्धकूप" इति न्यायेन पक्षद्वयं दुस्साधमिति वादिनि प्रतिवादिनि तद्व्यवस्थामाह–

अम्हाण संपयाए, काऊण य सो अभत्तदुगमेव । अट्ठमजुत्तो पोसह–वयं च पव्वे अकासि त्ति ।२०।

व्याख्या–अस्माकं 'सम्प्रदाये' गुरुक्रमे इति वर्त्तते इति क्रिया योज्या, इतीति किं ?, 'स' सुबाहुः 'अभक्तद्वयमेव' उपवासद्वयमेव, न तु पौषधद्वयं, पौषधकारणानामुच्चारप्रश्रवणस्थण्डिलप्रतिलेखनादीनां पर्वदिन एव प्रतिपादनात्, 'कृत्वा' विधाय 'पर्वणि' चतुर्दश्यष्टम्याद्यन्य-तरस्यां तिथौ 'पौषधव्रतं' पर्वदिनानुष्ठेयाभिग्रहविशेषं 'अकार्षीत्' करोतिस्म, किं विशिष्टः ? 'अष्टमयुक्तः' अष्टमेन श्रुतप्रसिद्धेन तपसा युक्तोऽष्टमयुक्त इति गाथार्थः। अयम्भावः–सुबाहुश्चतुर्दश्यादिपर्वणः पुरा पश्चाद्वा दिनद्वये पौषधद्वयविधाने शास्त्रसम्मत्यभावात् युगपत्त्रया-नङ्गीकाराच्च पर्वणः पुरा अभक्तद्वयं विधाय पर्वणि अष्टमयुतः पौषधमकार्षीदिति, नन्वष्टमस्य प्रथमदिन एवाङ्गीकार्यत्वात्मान्त्यदिने कथ-

मष्टमाङ्गीकारकर्तृत्वं तस्येति चेन्न, तृतीयदिनेऽष्टमस्यागमेऽङ्गीक्रियमाणतया स्वीकारात्, तथाहि "तएणं से वरुणे णागणत्तुए अण्णया कयाइ रायाभियोगेणं गणाभिओगेणं बलाभिओगेणं रहमुसलेणं संगामे आणत्ते समाणे छट्ठभत्तिए अट्ठमभत्तं अणुवट्टेति, अट्ठमभत्तं अणुवट्टेत्ता कोडुंबियपुरिसे सद्दावेति" इत्यादि भगवत्यां सप्तमशते नवमोद्देशके (३२० पत्रे) तथा (१७१ पत्रे) "तेणं कालेणं तेणं समएणं अहं गोयमा ! छउमत्थकालियाए इक्कारसवासपरियाए छट्ठंछट्ठेणं अणिक्खित्तेणं तवोकम्मेणं संजमेणं तवसा अप्पाणं भावेमाणे पुव्वाणुपुव्विं चरमाणे गामाणुगामं दुइज्जमाणे जेणेव सुंसुमारपुरे णगरे जेणेव असोगवणसंडे उज्जाणे जेणेव असोगवरपायवे जेणेव पुढविसिलावट्टए तेणेव उवागच्छामि २त्ता असोगवरपायवस्स हेट्ठा पुढविसिलावट्टयंसि अट्ठमभत्तं पगिण्हामि, दोवि पाए साहट्टु वग्घारियपाणी एगपोग्गलणिविट्ठदिट्ठी अणिमिसनयणे ईसींपब्भारगएणं काएणं अहापणिहितेहिं गत्तेहिं सव्विदिएहिं गुत्तेहिं एगराइयं महापडिमं उवसंपज्जित्ता णं विहरामि" इति भगवतीसूत्रानुसारेण तृतीयदिने अष्टमग्रहणं, एकरात्रिकमहाप्रतिमायास्तु तथा विधेयतयैव सत्त्वमवसेयमिति, तथा "अण्णे भणंति-एवं चिंतेयव्वं-किं मए पचक्खातव्वं ?, जइ आवस्सगमादियाणं जोगाणं सक्केति संध(संव)रणं काउं ता अभत्तट्ठं ववसति, असक्केंतो पुरिमड्ढावड्ढएगट्ठाणं, असक्केंतो निव्विगइयं, असक्केंतो पोरुसिमाइ विभासा, अह चउत्थभत्तिओ छट्ठं ववसइ छट्ठभत्तिओ अट्ठममिच्चाइ विभासा" इत्यावश्यकचूर्णौ (उत्तरार्द्धे २६४ पृष्ठे) प्राभातिकप्रतिक्रमणाधिकारोऽपि विभाव्यः, तथा "जइ से आवस्सयमादिया जोगा न परिहायंति. पारणगदिवसे एक्को वि घासो न लद्धो. ताहे छट्ठं करेउ, छट्ठपारणे बत्तीसादि. जाव घासो वि न लद्धो ताहे अट्ठमं करेउ" इति निशीथचूर्णौ (मो० भं० लि० पु० ७७९ पत्रे) पञ्चदशोद्देशके, तथा "तंमि पारणदिवसे सव्वहा अलब्भमाणे छट्ठं करेउ, मा य अणेसणीयं भुंजउ" इति निशीथचूर्णौ पीठिकायां च (श्री०भं०लि०पु० ६८ पत्रे) ज्ञेयं, किञ्च "अट्ठमभत्तिए पोसहं पडिजागरमाणे २ विहरति"

इति विपाकश्रुतपाठात् 'अष्टमभक्तमस्यास्तीत्यष्टमभक्तिकः' इति विशेषणं सुबाहोरेव, न पौषधस्य, अष्टमभक्तिकत्वं तु तृतीय एव दिने स्यान्नार्वाक्, इतरथा अष्टमभक्तिकस्य मुनेः प्रथमदिनेऽपि अष्टमभक्तत्वात् दशाश्रुताध्ययनोक्ततृतीयदिनप्रायोग्यपानकत्रयमेवोपादेयं भवेत्, न षष्ठचतुर्थप्रायोग्यपानकानि, अनिष्टञ्चैतत्, सर्वेषामपि विदुषां तथैवेष्टत्वात्, तथा विकृष्टभक्तिकस्यापि साधोः प्रथमदिनेऽपि उष्णविकटमेवोपादेयं स्यात्, नोत्स्वेदिमादिकमित्यपि ध्येयं, असङ्गतञ्चैतत्, तृतीयदिनादुपर्येव तस्य देवताऽधिष्ठितत्वेन शेषपानकानामपेयतयाऽऽम्नातात्, तथाच दशासूत्रं "विकिट्ठभत्तियस्स भिक्खुस्स कप्पइ एगे उसिणवियडे" इति, किञ्च युगपदष्टमप्रत्याख्याने प्रथमदिने चतुर्विधाहारपरिहारिणोऽन्ययोस्तयोः पानकाहारकर्तुरष्टमप्रत्याख्यातुराद्यदिने कथं प्रत्याख्यानं भवेत् ?, तथा अष्टमप्रत्याख्यातोपासकः षाण्मासिकतपश्चिन्तनावसरे आद्यदिने अष्टमं कर्तुं शक्नोमीत्युक्तौ सत्यां द्वितीयेऽन्हि किं तपः कर्तुं शक्नोमीति ब्रूयात् ?, तथा प्रथमेऽन्हि अष्टमभक्तं प्रत्याख्यामीत्युक्तावङ्गीक्रियमाणायां एकाभक्तार्थकर्तुः "सूरे उग्गए चउत्थभत्तं पच्चक्खामी"ति प्रत्याख्यानपाठपठनप्रसङ्गः, पठ्यते च "सूरे उग्गए अब्भत्तट्ठं"मित्यादि, आवश्यकसूत्रे (८५३पत्रे) तथैवोपलब्धेश्च, तथाच षष्ठाष्टमादिप्रत्याख्यानेष्वपि "सूरे उग्गए अब्भत्तट्ठं पच्चक्खामी"ति पाठो वाच्यो, न "छट्ठभत्तं पच्चक्खामी"ति पाठः, षष्ठाष्टमादीनान्तु सङ्केतमात्रत्वात्, तथाऽऽद्यदिने युगपदष्टमप्रत्याख्याने दिनान्तरयोः किं प्रत्याख्येयं स्यात् ?, पानकोच्चारे तु अभक्ते चतुःस्थानताहानिप्रसङ्गः, यदुक्तं "पढमंमि चउत्थाई, तेरसवीयंमि तइयपाणस्स। देसावगासतुरिए" इतिप्रत्याख्यानभाष्ये, तथा युगपत्प्रत्याख्यातुर्दिनत्रयेऽप्येकदिनप्रत्याख्यानभङ्गे सर्वप्रत्याख्यानभङ्गप्रसङ्गश्चेति बहुप्रपञ्चप्रथालं प्रसङ्गेन, न च चतुर्दश्यादिषु पौषधं विधाय तदनु दिनद्वयेऽपि तदङ्गीकारेणाष्टमत्वं स्पष्टमेवास्य स्यात्, किं कल्पनागौरवेणेति वाच्यं, तदा सति पूर्णिमाऽमावास्ये कल्यान्तेऽपि तस्याष्टमं न घटामाटीकते, चतुर्दश्यां भवदभिप्रायेण पाक्षिकत्वेनाभक्तकरणावश्यकत्वेन

दशमत्वमेव स्यात्, अस्मदभिप्रायेण तु सर्वं समञ्जसं, न च नन्दाधिकारे कथमित्थमेव नोररीक्रियत इति वाच्यं, इष्टापत्तेरस्मत्पूर्वजानां तथैवाभिप्रायात्, पूर्वसमाधानविधिस्तु तन्त्रान्तरमपेक्ष्यैवोक्त इति युक्तिलेशः ।२०। ननु भवतु तावत्सुबाह्वादिषु भवदाकूतेन समाधानं, परमभयकुमारकृतपौषधनये पर्वपदराहित्येन कथं ? भवद्विभावितपक्षापुष्टत्वमवशिष्टमिति नेदिष्ठद्विष्टोद्दिष्टमनिष्टमपाकुर्वन्नाह–

अभयकुमारस्स तहा, अणुचियसावज्जकज्जकारित्ता । भरहस्स व किण्हस्स व, न य जुत्तं पोसहो त्ति वये ।२१।

व्याख्या–'तथा' इति पूर्वपक्षिपरामर्शवाक्यं, 'अभयकुमारस्य' ज्ञाताङ्गप्रसिद्धस्य श्रेणिकसूनोः 'पौषध इति' पौषधपदं व्रते न युक्तं, पर्वैकार्थाभिधानात् नैवोचितं, "सति धर्मिणि धर्मान्वेषण"मिति न्यायात्सति पौषधव्रते पर्वापर्वविचारणोचितेति चर्चः, तदियता साध्यनिर्देशः, अत्र हेतुमाह–'अनुचित सावद्यकर्मकारित्वात्' अनुचितानि-पौषधिकाप्रायोग्यानि यानि सावद्यकर्माणि-सपापव्यापारास्तानि करोतीत्येवंशीलोऽनुचितसावद्यकर्मकारी, तस्य भावस्तत्त्वं, तस्मात्, दृष्टान्तावाह–'भरतस्येव कृष्णस्येव' च, यथा भरतस्यार्षभेः यथा च कृष्णस्य पौषध इति पदं न व्रते, तथा तस्यादेव हेतोरत्रापि पौषधपदं न व्रतवाचकमित्यनुमानलेशः, न चासिद्धो हेतुः, जलदवर्षणनैमित्तिकपूर्वसङ्गतिकसुरस्मरणादिरूपार्तध्यानस्य तत्र विद्यमानत्वात्, तथाहि (ज्ञाताङ्गे ३० पत्रे "अत्थि णं मज्झ सोहम्मकप्पवासी पुव्वसंगतिए देवे महिड्डीए जाव महासोक्खे, तं सेयं खलु ममं पोसहसालाए पोसहियस्स बंभयारिस्स उम्मुक्कमणिसुवन्नस्स ववगयमालावण्णगविलेवणस्स निक्खित्तसत्थमुसलस्स एगस्स अबीयस्स दब्भसंथारोवगयस्स अट्ठमभत्तं पगिण्हित्ता पुव्वसंगतिअं देवं मणसि करेमाणस्स विहरित्तए, तएणं पुव्वसंगतिए देवे मम चुल्लमाउयाए धारिणीए देवीए अयमेयारूवं अकालमेहेसु डोहलं विणेहिति, एवं संपेहेति २त्ता जेणेव पोसहसाला तेणेव उवागच्छइ २त्ता पोसहसालं पमज्जइ २त्ता उच्चारपासवणभूमिं पडिलेहेति २त्ता दब्भसंथारगं दुरूहति २त्ता-अट्ठमभत्तं पगिण्हति

२त्ता पोसहसालाए पोसहिए बंभयारी जाव पुव्वसंगतियं देवं मणसि करेमाणे २ चिट्ठति" इत्यादिरूपज्ञाताङ्गालापकेनाभयकुमारस्य यद्यपि पौषधशब्दप्रणयनमकारि तथापि पौषधशब्दो नात्र व्रतविशेषवाची, अकालजलदवर्षणाशंसानुगतत्वेन मानसिकसावद्यवत्त्वाच्च तदानीं स तत्संगारप्रयोगव्यापारसम्भारवान्, नहि तेन विना पौषधव्रतं सर्वज्ञविहितसम्मत्या स्वात्मलाभं लभते, तथैहिकोपकारकारिपूर्वसङ्गतिकसुर-स्मरणमपि न तत्र सङ्गतिमङ्गति, यतः [1]"तम्मि कए पढइ, पोत्थयं वा वाएइ, धम्मज्झाणं वा झियाएइ, जहा एए साहुगुणा अहं न समत्थो धारेउं, एवमाइ विभासा" इत्यावश्यकचूर्णिवाक्यादार्त्तध्यानं तस्य कर्तुं नोचितमिति सूचितं, शुद्धधर्मध्यानमात्रस्यैव तत्प्रतिपद्यमानताया-मङ्गतयाऽऽम्नातात्, वर्षाविर्पणाभिप्रायस्य चाऽऽर्त्तध्यानत्वं सर्वसिद्धमेव, स्थूलसर्वसावद्यव्यापारपरिहारवत्त्वं च तस्य सामायिकानुगतत्वात्, यदार्ष "सामाइयंमि ये कए, गिहकज्जं जो विचिंतए मूढो। अट्टवसट्टोवगओ, निरत्थयं तस्स सामइयं॥१॥" इति विभाव्यं, अपरं तत्(ज्ञाता)सूत्रपदैकदेशविवरणेऽपि (३४ पत्रे) "पोसहसालाए पोसहिए त्ति-'पौषधं' पर्वदिनानुष्ठानमुपवासादि तस्य 'शाला' गृहविशेषः पौषधशाला तस्यां 'पौषधिकस्य' कृतोपवासादेः" इत्यादिवाक्यादत्रोपवासस्यैव मुख्यतोपात्ता, न च "निक्खित्तसत्थमुसले" इत्यादिपदानि पौषधव्रतबोधकानीति वाच्यं, तथा च सति "तएणं से पउमनाभे राया कच्छुल्लनारयस्स अंतिए एयमट्ठं सोच्चा निसम्म दोवतीए देवीए रूवे य ३ मुच्छिए ४ दोवइए अज्झोववण्णे, जेणेव पोसहसाला तेणेव उवागच्छइ २त्ता पोसहसालं जाव पुव्वसंगतियं देवं" चेत्यादी (पत्र२१४) ज्ञाताङ्गषोडशाध्ययनवाक्येऽपि भवत्परिभावितसर्वपदानां "जाव" पदेन सङ्गृहीतत्वात् तस्यापि पौषधव्रतताऽऽपत्तिः स्यात्, न च तस्मिन् पौषधमतं कस्यापीष्टं, जिनधर्मवासनाया अपि तस्मिन्नभावात्, ननु "पोसहं पारेइ"त्ति वाक्यादभयकुमाराधिकारे पौषधपदेन व्रतसम्भावना-

---

1 "तम्मि कए झाणो पढतो पोत्थगं वा वायंतो धम्मज्झाणं झियायति, जधा एते साधुगुणा अहं मंदभग्गो असमत्थो त्ति विभासा" इति मुद्रिताव०चू०उ० पृष्ठ ३०४।

ऽपि स्यादेवेति चेन्न, "सयंपभा कन्ना × × अभिनंदण-जयनंदणचारणसमणसमीवे सुयधम्मा सम्मत्तं पडिवन्ना, अण्णया य पव्वदिवसे पोसहं अणुपालेऊण सिद्धायतणंमि कयपूया पिऊणो पासमागया-ताय ! सेसं गिण्हह त्ति पणएण रण्णा पडिच्छिया सिरसा, ततो णेण णिज्झाइया परितोसवसविसप्पियणयणजुयलेण, चिंतियं च णेण-अहो !! इमा एवं सुंदररूवा किह मण्णे अणुसरिसं वरं लहिज्ज?त्ति, एवं चिंतिऊण विसज्जिया 'वच्च पुत्ति !' पोसहं पारेह त्ति" वसुदेवहिंडौ एकान्नविंशे(२१)लम्भे (३१० पत्रे), अत्रापि "पोसहं पारेह त्ति" स्यात्पौषधशब्देन भवदुक्त्याऽत्रापि पौषधव्रतत्वमापद्येत, न चैवं, तस्या जिनपूजाकरणपितृपादनमनशेषदानादिकं सर्वं सावद्यव्यापार-निवृत्त्याऽनुपपन्नं भवेत्, तस्मात्पारणशब्देन न पौषधव्रतानुमानं, किन्त्वत्र पौषधशब्दोऽभिग्रहसूचकः इति तत्त्वं, भरतकृष्णयोस्तु पौषधपद-मेकादशव्रतबोधकं न केनाप्यभ्युपगम्यते, सावद्यव्यापारपारवश्यादेवेति, तथाहि-"ततेणं से भरहे राया आभिसेक्कातो हत्थिरयणातो पच्चोरुहइ २त्ता जेणेव पोसहसाला तेणेव उवागच्छइ २त्ता पोसहसालं अणुपविसति २त्ता पोसहसालं पमज्जति २त्ता दब्भसंथारगं संथरेति २त्ता दब्भसंथारं दुरूहति २त्ता मागहतित्थकुमारस्स देवस्स अट्ठमभत्तं पगिण्हति २त्ता पोसहसालाए पोसहिए बंभयारी उम्मुक्क-मणिसुवण्णे ववगयमालावण्णगविलेवणे णिक्खित्तसत्थमुसले दब्भसंथारोवगते एगे अबीए अट्ठमभत्तं पडिजागरमाणे २ विहरति । ततेणं से भरहे राया अट्ठमभत्तंसि परिणममाणंसि पोसहसालातो पडिणिक्खमति २त्ता जेणेव बाहिरिया उवट्ठाणसाला तेणेव उवागच्छइ २त्ता कोडुंबियपुरिसे सद्दावेति २त्ता एवं वयासी-खिप्पामेव भो देवाणुप्पिया ! हयगयरहपवरजोहकलियं चाउरंगिणिं सेणं सण्णाहेह, चाउग्घंटं आसरहं पडिकप्पेह त्ति कट्टु मज्जणघरं अणुपविसइ" इत्यादि (१९५ पत्रे) "जाव × × भोयणमंडवंसि सुहासणवरगए अट्ठमभत्तं पारेइ" इति (१९९ पत्रे) श्रीजंबूद्वीपप्रज्ञप्तीपाठेन यद्यपि पौषधपदमुपात्तं, तथापि पौषधशब्देनाष्टमतपोविशिष्टाभक्तार्थ एवावसेयो, न व्रतं, सेना-

समारनोपरेवस्नानमज्जनादिसावद्ययोगप्रवृत्तेस्तद्वाधिकायाः साक्षादुपलभ्यमानत्वात्, तथा "अट्ठमभत्तं पारेइ" इति वाक्येनाष्टमतपः-पारणस्यैव समर्थितत्वात्, ततश्चाभयाधिकारेऽष्टमपारणे पौषधपारणस्य भरताधिकारे पौषधपारणेऽष्टमपारणस्य भणयनात्पौषधाष्टमयोरत्र एकत्वमवसीयते, अन्यथाऽत्र ग्रहणं पौषधस्य पारणं चाष्टमस्येति विरोधः स्यात्, न च पौषधपारणादनु सावद्यकार्यकरणं तस्य भविष्यतीति वाच्यं, अत्रैव वादामतीर्थसाधनाधिकारे "अहतं (अखण्डितं) चाउग्घंटं आसरहं पोसहिए नरवई दुरूढे" इति वाक्यैकदेशेन पौषधिकस्य तस्य रथारोहणमादिष्टं, तद्द्वारा सर्वाण्यपि समुद्रावगाहनादीनि अष्टमपारणकपर्यन्तान्यपि सावद्यकृत्यानि समुपात्तानि द्रष्टव्यानि, तथाच कथमेतादृशे व्रते तस्मिन् पौषधशब्देन कल्प्यमाने एतावत्सावद्यकर्मावकाशः ?, अभक्तार्थे तु यथारुचिसावद्यव्यापारपरिहारस्येष्टत्वाददुष्टत्वं ध्येयं, अपरं तत्रैव ग्रन्थे (२१४ पत्रे) "सिंधुदेवीए अट्ठमभत्तं पगिण्हइ २त्ता पोसहसालाए पोसहिए बंभयारी जाव दब्भसंथारोवगए अट्ठमभत्तीए सिंधुदेवीं मणसि करेमाणे चिट्ठति । ततेणं तस्स भरहस्स रण्णो अट्ठमभत्तंसि परिणममाणंसि सिंधूए देवीए आसणे चलिते" इत्यादि "जाव पडिविसज्जेति, तत्तेणं से भरहे राया पोसहसालातो पडिनिक्खमति २त्ता जेणेव मज्जणघरे तेणेव उवागच्छइ २त्ता ण्हाते कयबलिकम्मे जाव जेणेव भोयणमंडवे तेणेव उवागच्छइ २त्ता भोयणमंडवंसि सीहासणवरगते अट्ठमभत्तं पारेइ" इति सूत्रेणापि तस्य पौषधशब्देनाष्टमतपोविशेषरूपाभक्तार्थ एव समर्थितः,तथा श्रीमदावश्यकबृहद्वृत्तौ श्रीहरिभद्राचार्यकृतायां (१९०पत्रे) "पुव्वेण य मागहतित्थं पाविऊण अट्ठमभत्तोसितो रहेण समुद्दमवगाहित्ता चक्कणाभि जाव, ततो नामंकं सरं विसज्जेइ" इतिवाक्यादष्टममात्रमेव पौषधपदवियुतं दर्शितं भरतस्येत्यपि ध्येयं, तथाच भरतालापकैरभयकुमारालापकेन च कः पाठ भेदः ? को वा सावद्यकर्तृत्वे भेदोऽस्ति ?, येनैकत्रोपवास-मात्रार्थवाचकताऽन्यत्र च व्रतार्थवाचकत्वं पौषधस्येति विमर्शनीयं, तस्मादङ्गीकुरु सर्वबहुश्रुताविश्रुतमपि भरते पौषधव्रतं, त्यज वाऽभये

पौषधव्रताभिसन्धिमिति प्रतिवन्दीयचो विचार्यं, नन्वयं जीत एव, यदुत चक्रिणः पौषधव्रतादृते न देवताऽऽगमनं भवेदिति तस्योपवासमात्रकर्त्तृत्वकल्पना कथङ्कारं कार्येति चेन्न, "तहवि असद्दहंतो सव्वाणि एगिंदियरयणाणि लोहमयाणि करित्ता सव्वबलेण तिमिसगुहं गतो, अट्ठमे भत्ते कए भणति कयमालो-अतीता चक्कवट्टिणो, जाहि त्ति, णेच्छति, इत्थि विलग्गो, मणिं हत्थिमत्थए काऊण पत्थितो, कयमालेण आहतो मतो गतो छट्ठीए पुढवीए" इति श्रीआवश्यकचूर्णिकारेण (उत्तरार्द्धे १७६पृष्ठे) कूणिकाधिकारे भवदुक्त्या पौषधव्रतसाध्ये सुरेऽष्टम एवोद्दिष्टो, न पौषधः, इति अष्टमेनापि तदधिष्ठाता देवो दर्शनं ददौ, न्यूनाधिकसाधनाऽऽराधनायामाराध्यस्य दर्शनदानायोगात्, न च द्विष्टतया स तस्य दर्शनं ददाविति वाच्यं, पूर्वमविष्टत्वाख्यातेऽपि तद्वाक्याकरणाद्विष्टत्वमिति दिक्, तस्मात्पौषधशब्देनात्र द्वादशस्वपि स्थानेषु अष्टमतपोविशेष एवावसेयः, कृष्णवासुदेवाधिकारेऽपि "जेणेव पोसहसाला तेणेव उवागच्छइ २त्ता जहा अभओ, णवरं हरिणेगमेसिस्स अट्ठमभत्तं पगिण्हति, जाव अंजलिं कट्टु एवं वयासी-इच्छामि णं देवाणुप्पिया० ! सहोदरं कणीयसं भाउयं विदिण्णं, ततेणं से हरिणेगमेसी किण्हं वासुदेवं एवं वयासी" इति (८ पत्रे) श्रीअन्तकृद्दशापाठेन पौषधशब्दोक्तावपि अष्टममात्रमेव कृष्णस्य सर्वैरभ्युपगम्यते, अविरतिसम्यग्दृष्टित्वेन व्रतधारित्वानभिसन्धानात्, तथा चोक्तं "हंता सद्दहिज्जा पत्तिएज्जा रोएज्जा, से णं सीलवयगुणवयवेरमणपच्चक्खाणपोसहोववासाइपडिवज्जेज्जा ?, णो तिणट्ठे समट्ठे, से णं दंसणसावए हवइ, अभिगयजीवाजीवे जाव अट्ठिमिंजपेमाणुरागरत्ते" इति श्रीदशाश्रुतस्कन्धे, अन्यच्च "जहा अभओ त्ति" सूत्रपाठेन कृष्णाभययोः पौषधाङ्गीकाराधिकारे यत्साम्यमुपादर्शि तदपि विचार्यमेव, कृष्णस्य पौषधव्रतसिद्धावभये पौषधव्रतसिद्धिरिति भावः, तथा स्थानाभिधानग्रन्थवृत्तावपि "समयंमि तओ कण्हो, पोसहसालाइ अट्ठमं भत्तं। हरिणेगमेसिदेवं, मणम्मि काउं पगिण्हेई ।१। उम्मुक्कमणिसुवण्णो, ववगयमालाविलेवणो तत्थ। तणसंथारनिसण्णो, चिट्ठइ

नो भद्दमं पुण्णं ।२।" १२ पत्रे, इत्येतद्ग्रन्थेन पौषधशब्दस्य वाचकत्वमष्टममात्रे एवं दर्शितं मन्तव्यं; न च प्रत्याख्यानपौषधादीनां गणिसंघसर्गेऽङ्गीक्रियमाणे कथमष्टमत्वमस्यापादितमिति वाच्यं, प्रत्याख्यानं विनाऽपि दिनद्वयोपरि भोजनरहितस्याप्यागमे अष्टमत्वाभिधानात्, यतो नावश्यकबृहद्वृत्तौ (२२२ पत्रे) श्रीहरिभद्रसूरयः "तत्थ सामी पोसबहुलपाडिवए इमं एयारुवं अभिग्गहं अभिगिण्हइ चउव्विहं-दव्वओ ४, दव्वओ-कुम्मासे सुप्पकोणेणं, खेत्तओ-एलुयं विक्खंभइत्ता, कालओ-नियत्तेसु भिक्खायरेसु, भावओ-जहा रायधुया दासत्तणं पत्ता. नियलबद्धा. मुंडियसिरा. रोयमाणी. अट्ठमभत्तिया, एवं कप्पति; सेसं न कप्पति" इत्यादि निजगदुः, तथा च प्रत्याख्यानमन्तरेणापि तस्यां भक्तशब्दप्रयोगो भोजनाभावसूचकोऽवगम्यः, न चैतयाऽष्टमं तपः प्रत्याख्यातं भविष्यतीति वाच्यं "ततियदिवसे घणं पुच्छइ-साहइ (कथयंत) मा मे(मूये)मारेहि, ताहे थेरदासी एक्का, सा चितेइ-किं मे जीविएणं?, सा जीवउ वराई, ताए कहियं-अमुयघरे, तेण उग्घाडियं, एताहे पिच्छिउं कूरं पमग्गितो, जाव समावत्तीए (समीपस्था) नत्थि ताहे कुम्मासा दिट्ठा, ताहे ते सुप्पकोणे दाऊण लोहारघरं गओ" (२२४ पत्रे) इत्यावश्यकबृहद्वृत्त्युक्त्या तृतीये दिने कुल्माषाणामङ्गीकरणे तस्यामसङ्गतमेव स्यादिति ध्येयं, ननु यद्युपवास-प्रत्याख्यानमेवाङ्गीक्रियते तर्हि ब्रह्मचर्यादिज्ञानां किमित्यभिधानमिति चेन्न, तेषां देवताऽऽराधनोपचारमात्रफलकत्वेत्यभ्यूहं, एवं च भरतकृष्ण-योरिवाभयकुमारस्यापि पौषधशब्दोऽष्टमतपो वाचक एव द्रष्टव्यः, तदियता वाच्येन यद्यभयस्यापर्वपौषधकरणेऽविधिरभविष्यत् तर्हि सा देवता दर्शनं नादास्यत्, इति पूर्वपक्षीयविवक्षितप्रतिबन्दी दूरापास्ता द्रष्टव्या; उपवासानामपर्वण्यपि करणे विधिरेवेति तद्दर्शने बीज-मन्वेष्यमिति दिक् ।२१। ननु भवतु सावद्ययोगप्रवृत्तत्वेनाभये पौषधशब्देन व्रतविशेषानभिधेयता; परं श्रीविजयाभिधाधिपतिविहितशास्त्र-मरिखसंतादपौषधविधेः किं समाधानमाधेयमिति पूर्वपक्षीयोक्तं मनसि निधायाह-

एवं सिरिविजयस्स वि, नूणं सगदिवसपोसहोत्तीए। मज्झण्हे च्चिय निग्गम-वयणाउ न सो वओऽभिमओ ।२२।

व्याख्या-'एव'मिति शब्देन पूर्वपक्षपरामर्शः, यथा पूर्वं तथाऽत्रापीदं समाधानं दृश्यं, 'श्रीविजयस्यापि' पोतनपुराधिपतेरपि विपक्षिपक्षसाधनोदाहरणाऽवशिष्टभूतस्यापीत्यर्थः, 'नूनं' निश्चितं 'सप्तदिवसपौषधोक्तौ' सप्तदिनप्रमितपौषधवक्तव्यतायां 'स' पोषधो न 'व्रत'मेकादशव्रत'मऽभिमत'मीप्सितं, प्राकृतत्वाद्व्रतमित्यत्र पुंस्त्वं, पुंनपुंसकत्वाद्वा, तत्र हेतुमाह-'मध्याह्ने' मध्यन्दिने एव 'निर्गमवचनात्' पौषधागारतोऽपसरणवचनात्, अयम्भावः-"तथा चउत्थेण भणियं-माहणेण आइट्ठो पोयणाहिवस्स असणिवाओ, न सिरिविजयस्स रण्णो, तं सेयं णे सत्तरत्तं अण्णं रायं ठावेउं ति, ततो निमित्तिणा भणियं-साहु भो महामंती ! सि, एयं कायव्वं, रन्नो जीवियपरिरक्खणनिमित्तं अहमवि आगओ, नियमजुत्तो राया नित्थरिहिति उवसग्गं, निमित्तिवयणं च परिग्गहेऊणं राया जिणायतणमागतो सउरोहो, मंतीहि वि से वेसमणपडिमा पगइसमग्गेहिं अहिसित्ता सेविज्जए राओवयारेण, सिरिविजयो वि दब्भसंथारोवगतो सत्तरत्तं परिचत्तारंभपरिग्गहो बंभयारी संविग्गो पोसहं पालेइ, सत्तमे य दिवसे समंततो मेहा पाउब्भूया सलिलभारग(रु)या पवणवेगवित्थरमाणा विज्जुज्जोइयपासा भयजणणनिट्ठुरगज्जियऽसणा, ततो मज्झण्हकाले महयासद्देण पासादं वेसमणपडिमं च चुण्णयंती इंदासणी पडिया, राया अभिनंदिओ पगतीहिं 'नमो अरिहंताणं'ति निग्गतो पोसहसालाओ त्ति, दिट्ठो य तुट्ठेण परियणेण" इति वसुदेवहिण्डिग्रन्थस्यैकान्नविंशति(२१)लम्भे (३१६ पत्रे) मध्याह्ने विद्युत्पाताभिधानं तदैव च 'नमोऽर्हद्भ्य' इत्युक्तिपूर्वकं तस्य पौषधागारान्निर्गमनं च सूचितं, तथाच यदि तेन सप्ताहोरात्रं पौषधव्रतं विहितं स्यात्तदा मध्याह्न एव पौषधागारतो निर्गमनं न कृतं भवेत्, अहोरात्रस्य विचाले एव तत्पारणाभिधानात्, 'नमो अरिहंताण'-मिति पदेन च पौषधपारणमपि न भवेत्, तत्पारणविधेरन्यथैवोपलब्धेः, पौषधेऽन्तःपुरपुरन्ध्रिवर्गसंसर्गश्च निसर्गतो निषिद्धश्चेत्यपि ध्येयं,

नेन च श्रीजिनवरराजस्य कथं शास्त्रयुक्त्याऽहेतुक्त्या पौषधव्रतसहकं भवता तंतन्यते ?, अभिग्रहविशेषस्तु यावदहमेनमुपसर्गं न निस्तरामि तावन्ममायं नियम इत्येवम्भूतो भवेदपि, पुराऽपि "नियमजुत्तो राया निस्थरिहिति" इति वाक्येन नियमस्यैव स्फूर्तिर्दर्शिता, अभिग्रहे तु सङ्केतरूपत्वेन मध्याह्नेऽपि निर्गमो न दुर्गमः, अर्हन्नमस्कारमात्रेण तत्पारणमपि न प्रपारदं, तथाचात्र पौषधशब्देन न व्रतविशेषः, किन्त्वभिग्रहविशेष इति सम्भाव्यते, "सर्वतो गरीयसी भगवती अन्यथानुपपत्ति"रिति शिष्टसङ्केतादन्यथानुपपत्तिरेवात्र नियामिकेति तत्त्वं ।२२।

ननु पौषधोपवास पौषधरूपाभ्यामभिधेयेऽभिग्रहे कथमेकाद्यव्रतताभिसन्धिर्नाभिधीयते भवतेति(प्रश्ने समाधानमाह)प्रश्नं समादधान आह-

पोसहउववासपयं, पोसहसद्दो य पव्वउववासे । कत्थवि उववासे च्चिय, अन्नत्थवि पोसहे त्ति पयं ।२३।

व्याख्या-पौषधोपवासपदं च पुनः पौषधशब्दश्च एकादशव्रतार्थं विनाऽपि कुत्रापि शास्त्रे 'पर्वोपवासे' पर्वदिनोपादेयाभक्तार्थे दृश्येते, मध्यस्थः "कत्थवी"ति शब्दो 'डमरुकमणि'न्यायेनाग्रेऽपि लगयितव्यः, तथाच कुत्रापि शास्त्रे 'उपवास एव' केवलेऽभक्तार्थे एव दृश्येते, पौषध इति पदं 'अन्यत्रापि' अर्थान्तरेष्वपि दृश्यते इति गाथार्थः । अयम्भावः-पौषधोपवासपदं-पौषधे-पर्वणि उपवासः पौषधोपवासः इति व्युत्पत्त्या पर्वदिनानुष्ठेयाऽभक्तार्थे सर्वत्र सिद्धं, पौषधशब्दोऽपि "पोसहियतवेत्ति पोषं दधातीति पोषधं-अष्टमीपाक्षिकादि, पौषधे भवं पौषधिकं, तत्र तत्तपश्चर्या पौषधिकतपः" इति व्यवहारभाष्य(पीठिका पत्र ४५) व्याख्यानात् तथा "पोसहो अट्ठमि चउद्दसीसु उववासकरण"मिति पाक्षिकसूत्रचूर्णिवाक्येन च पर्वदिनाभक्तार्थे सिद्ध,ः तथा पौषधोपवासपदं "वाराभोयं पोसहोववासं पडिविसु" त्ति पाठान्तरप्रसिद्धदशाश्रुत(स्कन्ध)सत्कपदैकदेशव्याख्यायां "द्वारं आभोग्यतेऽवलोक्यते यैस्ते द्वाराभोगाः-प्रदीपाः, आहारत्यागरूपं उपवासं च कृतवन्तः" इति कल्पाध्ययनविषमपदनिरुक्तोक्त्या उपवासमात्रेऽपि सिद्धं, तथा पौषधपदमपि "कइयाइं च(भाणु)सेट्ठी जिण-

पूयाइं काऊण सहधरिणीए पज्जालिएसु दीवेसु पोसहिओ दब्भसंथारयगओ थयथुइमंगलपरायणो चिट्ठइ" इति (१३३ पत्रे) वसुदेवहिण्डि-वाक्येन श्रियां सहकृतं प्रज्वालितप्रदीपे जिनायतने व्रतग्राहिणो निवासासम्भवेन तस्योपवाससमात्रवाचकः; एवं पौषधशब्दोऽन्येष्वपि तेषु तेष्वर्थेषु गम्यस्तथाहि—"मणदुप्पणिहाणं, पणिधी नाम निरोधो मणसः; तं मणं ण सुट्ठु णिरोहेति, चिंतेति (इय) पोसहितो, इमं (तस्य) सुकयं घरे इमे दुक्कडयं ति" इत्यावश्यकचूर्णि (उत्तरार्द्ध पृष्ठ ३०१) वाक्येन सामायिकेऽपि पौषधशब्दप्रयोगः; तथा "आणवणप्पओगे" इत्यत्र "अन्ने भणंति 'अमणुण्णपओगे' अमणुण्णा सद्दादी जाया तो सदेससस्से चेव मज्झे अ(न्नत्थ)ण्णस्स वच्चति जत्थ तेसिं संपातो न भवति. चिंतेइ वा काहे पोसहो पूरेहिति तो अन्नत्थ वच्चीहामो" इत्यावश्यकचूर्णी(उत्तरार्द्ध पृष्ठ ३०३)वचनात् देशावकाशिकेऽपि पौषध-शब्दप्रयोगः, तथा "पक्खियं पोसहं पडिजागरेमाणा विहरिस्सामो" इति शंखाधिकारे (व्याख्या)प्रज्ञप्तिवाक्यादिष्टजनपोषस्य साधर्मिक-वात्सल्यरूपस्यापि पौषधशब्दाभिधेयत्वं, तथा "मेहरहो वि सूरे उग्गए पडिमापोसहं पारे(उं)इ" इत्यादिः (३३९ पत्रे) वसुदेवहिण्डि-वचनात्पौषधशब्देनाभिग्रहोऽपि ध्येयः, न च प्रतिमायां च पौषधं चेति द्वे कर्मणीति वाच्यं, "अण्णया कयाइ परिवड्ढमाणसंवेगो अट्ठमभत्तं पगिण्हिऊणं दाऊणं उरं परीसहाणं पडिमं ठितो" इति प्रारम्भवाक्यात्तस्याष्टमस्यैव प्राक् ग्रहणं; न पौषधस्य, अष्टमस्यैव पौषधवाच्यत्वे सिद्धोऽनायासेनाष्टमरूपाभक्तार्थेऽपि पौषधशब्दप्रयोगः; इत्यलं प्रसङ्गेनेति ।२३। ननु पौषधोपवासस्य पर्वदिनोपवासवाचकत्वे सिद्धे पौषधव्रते प्रतिष्ठितस्यापि पौषधोपवासपदस्यैतदर्थवाचकत्वेऽनयोरन्योऽन्यमन्यूनानतिरिक्तत्वमायातमित्याशङ्कामपनेतुकामः प्राह—

जो पुण वयाहिगारे तस्सेव पयस्स पव्वउववासो । अत्थो सत्थे लिहिओ नेओ सो नो पवत्तिकरो ।२४।

व्याख्या—यः पुनः 'व्रताधिकारे' व्रतवक्तव्यतायां तस्यैव पदस्य पौषधोपवासलक्षणस्य 'शास्त्रे' सिद्धान्ते पर्वोपवास इत्यर्थो 'लिखितो'

पितरणहारिरसविनाशीठनः सोऽर्थो न प्रवृत्तिकरो 'ज्ञेयो'ऽवगन्तव्यः, नहीनमर्थमङ्गीकृत्य कश्चित्पौषधव्रते प्रवर्त्तते, किन्तु गच्छतीति गोरित्यादिवद्व्युत्पत्तिमात्रमेवार्थ इति भावार्थः, तथाचोक्तं श्रीगुरुचरणैः समवायाङ्गविवरणे (१९ पत्रे) तथाहि "पौषधं-पर्वदिनमष्टम्यादि-स्तत्रोपवासो-अभक्तार्थः पौषधोपवास इति, इयं व्युत्पत्तिरेव, प्रवृत्तिस्त्वस्य शब्दस्याहारशरीरसत्काराब्रह्मचर्यव्यापारपरिवर्जनेष्विति" ॥२४॥ नन्वाहारपरित्यागादिपदानां समस्तानामिव व्यस्तानामपि तद्वाचकत्वेन समं समाधानमिति विपक्षिपक्षं प्रतिक्षिपन्नाह—

आहाराइपयाणं, जइवि हु कयदेससव्वभेयाणं । भंगा भवंति असिई, तुवि दो भेया वएऽणुमया ॥२५॥

व्याख्या—यद्यपि 'हु'र्निश्चये 'आहारादिपदानां' आहारपरित्यागशरीरसत्कारपरिहाराब्रह्मचर्यपरिहारव्यापारपरिहाररूपाणां चतुर्णां पदानां अशीतिर्भङ्गा 'भवन्ति' जायन्ते, किम्भूतानामाहारादिपदानां ? 'कृतदेशसर्वभेदानां' देशश्च सर्वश्च देशसर्वौ, तौ च तौ भेदौ च देशसर्वभेदौ, कृतौ देशसर्वभेदौ येषां(यानि)ते तथा, तेषां, 'तुवि' तथापि 'व्रते' पौषधव्रते परमार्थतश्चतुष्कसंयोगिनौ आहारस्य देश-सर्वपरित्यागरूपौ द्वौ 'भेदा' इति "बहुवयणेण दुवयणं" इति प्राकृतलक्षणात् भेदौ अनुमतौ, सर्वधर्मगच्छीयगीतार्थानामिति शेषः, अयम्भावः—एककसंयोगाः सर्वे अष्टौ भङ्गाः, द्विकसंयोगाः षड्भङ्गाः १२।१३।१४।२३।२४।३४एतेषु एकैकस्मिंश्च द्विकसंयोगे दे.दे १।दे.स २।स.दे ३। स.स ४।रूपाश्चत्वारो भङ्गाः, एवं षड्गुणाश्चतुर्विंशतिः, त्रिकयोगाः [illegible] भङ्गा भवन्ति, एकैकस्मिंश्च त्रिकयोगे देशसर्वभङ्गापेक्षया दे.दे.दे १।दे.दे.स २।दे.स.दे ३।दे.स.स ४।स.दे.दे ५।स.दे.स ६।स.स.दे ७।स.स.स ८।इत्येवं अष्टौ अष्टौ भङ्गाः स्युः, ते च चतुर्गुणिता द्वात्रिंशत्सर्वे भवन्ति, चतुष्कयोगे १२३४एकः, तत्र देशसर्वापेक्षया षोडशभङ्गाः, तथाहि—दे.दे.दे.दे १।दे.दे.दे.स २।दे.दे.स.दे ३। दे.दे.स.स ४।दे.स.दे.दे ५।दे.स.दे.स ६।दे.स.स.दे ७।दे.स.स.स ८।स.दे.दे.दे ९।स.दे.दे.स १०।स.दे.स.दे ११।स.दे.स.स १२।स.स.दे.दे १३।स.स.दे.

स१४।स.स.स.दे१५।स.स.स.स१६।एवं सर्वेषां मीलने अशीतिर्भङ्गानां भवन्ति, तत्र चतुष्कसंयोगिषु षोडशसु भङ्गकेषु अष्टमषोडशरूपौ आहारे देशसर्वपरिहारतया द्वौ भेदौ सर्वधर्मगच्छगीतार्थसम्मतौ दृश्याविति तात्पर्यः, न चास्मत्स्वच्छगच्छव्यवस्थया सर्वेष्वपि भङ्गेषु तद्ग्रहणं भविष्यतीति वाच्यं "एतेषां मध्ये पूर्वाचार्यपरम्परया सामाचारीविशेषेण आहारपौषध एव देशसर्वभेदाद् द्विधाऽपि सम्प्रति क्रियते, निरवद्याहारस्य सामायिकेन सहाविरोधदर्शनात्, सर्वसामायिकवता साधुनोपधानतपोवाहिश्रावकेणाप्याहारस्य ग्रहणात्, शेषास्त्रयः पौषधाः सर्वत एवोच्चार्यन्त" इति (१६३ पत्रे) रत्नशेखरसूरिकृत(श्राद्ध)प्रतिक्रमणसूत्रवृत्तिवाक्यात् शेषभङ्गनिषेध एव भवताऽप्यभ्यूह्य इति ।२५। अथातिदेशदर्शनपूर्वकं तमेवार्थं समर्थयन्नाह–

सामाइए वि एगूण–पण्णभंगेसु एगमिह गहीयं । अण्णे वि हु जइ भेया, तत्थ पमाणं ? पसंगो तो ।२६।

व्याख्या–'सामायिकेऽपि' सामायिकव्रतेऽप्यास्तां पौषधे. योगत्रयकरणत्रययोगनिष्पन्नेष्वेकोनपञ्चाशद्भङ्गकेषु (श्रावकव्रतभङ्गकप्रकरणस्य) "तिन्नि तिया तिन्नि दुया, तिन्निक्किका य हुंति जोगेसु ।" इत्यादिगाथापद्धतिसमवगम्येषु एक एव (मनोवाक्कायरूप)योगत्रयकरण-कारापणरूपकरणद्वयानुगतो द्विविधत्रिविधरूपो भङ्ग इह श्रीमज्जिनशासने गृहीतः, सामायिकव्रतोच्चारे तथैवाङ्गीकारात्, त्रिविधं त्रिविधेनेति प्रत्याख्यानस्य कादाचित्कत्वादत्रासंग्रहः, यदि चान्येऽपि भेदा द्विकत्रिकादिकाः 'हु'निश्चयेन 'तत्र' सामायिकव्रते प्रमाणं ? 'तो' इति ततः 'प्रसङ्गो' अतिप्रसङ्गो भवेदिति शेषः, तथाच सामायिकमेषु स्थानेषु एतावत्कालमनेन विधिना कार्यमित्यपूर्वपूर्वाचार्यपरम्परारूपमुद्रोन्मुद्रणमेव शरणं स्यात्, समतारूपनैश्चयिकसामायिकस्य तु सर्वत्र यथाऽवसरं क्रियानिरपेक्षतयाऽङ्गीकारादिति भावः, एवं विसङ्कलितेषु भङ्गकेषु न गीतार्थानां पौषधप्रवृत्तिः, किन्तु सङ्कलितेष्वेव आहारादिषु चतुर्षु पदेष्विति ध्येयं ।२६। ननु भवतु सर्वाभिर्व्यवस्थाभिर्व्यवस्थापितं

पर्वतिथिषु पौषधव्रतं, परं शास्त्राणि सर्वाण्यपि परस्परयविसंवादीनि 'विचारतो विशेषप्रतिपत्तिरपी'ति विद्वत्सङ्केत. इति तत्त्वार्थभाष्य-तद्वृत्त्याख्याने अपि विचारणीये इति तदस्याभिमतवचो विचारयितुं *गाथामाह–*

तत्तत्थविवरणे जं, [1]पडिवाइसु अणिययत्तमस्सुत्तं । तत्थ य वीयं सत्ती–सब्भावाई न वोत्तव्वं ।२७।

व्याख्या–'तत्त्वार्थविवरणे' सिद्धसेनगणिविरचिततत्त्वार्थवृत्तौ 'प्रतिपदादिषु' तिथिषु-चतुर्दश्यष्टमीपूर्णिमाऽमावास्याभिधानतिथिविशेषावशिष्टेषु दिनेषु [2]यत् 'अस्य' पौषधोपवासस्य'अनियतत्व'मवश्यन्तयाऽकरणीयत्वं 'उक्तं' प्रतिपादितं विवरणकारेण, तथाच चतुर्दश्यष्टमीपञ्चदशीषु तन्नियतत्वञ्चोक्तमिति प्रस्तावादायातं, तत्र 'शक्तिसद्भावादि' शक्ति–स्तत्कर्तुः सामर्थ्यं, तस्याः सद्भावो–ऽस्तित्वं. स आदिर्येभ्य तासु तदकरणेऽपि प्रायश्चित्ताभावादेस्तच्छक्तिसद्भावादि 'वीजं' हेतुर्न वक्तव्यं, अयम्भावः "पौषधोपवासो नाम–पौषधे उपवासः पौषधोपवासः, पौषधः पर्वेत्यनर्थान्तरं, सोऽष्टमीं चतुर्दशीं पञ्चदशीं अन्यतमां वा तिथिमभिगृह्य चतुर्थाद्युपवासिना व्यपगतस्नानुलेपनगन्धमाल्यालङ्कारेण न्यस्तसर्वसावद्ययोगेन कुशसंस्तारकफलकादीनामन्यतमं संस्तारकमास्तीर्य स्थानं वीरासननिषद्यानां वाऽन्यतममास्थाय धर्मजागरिकापरेणानुष्ठेयो भवति" इति तत्त्वार्थ(अध्याय७ सूत्र १६)भाष्यं, अथैतद्वृत्तिः "पौषधोपवासो नामेत्यादिना पौषधस्वरूपं निरूपयति–रूढ्या पौषधशब्दः पर्वसु वर्त्तते, पर्वाणि चाष्टम्यादितिथयः, पूरणात्पर्व, धर्मोपचयहेतुत्वात्, तत्र पौषधे–पर्वणि उपवासः पौषधोपवासः, त्रिविधस्य चतुर्विधस्य वा आहारस्य छेदः, साधने कृते सति भवति समासो. योगविभागेन वा सप्तमीसमासो, नाम शब्दो वाक्यालंकृतौ, यस्य वा नियमविशेषस्येदं नाम पौषधोपवासः. सोऽयमाख्यायते 'पौषधे उपवास' इत्यादिना भाष्यकारेण, 'अनर्थान्तरं' इत्येकार्थता,

१ "पडिवाइतिहिसु तस्सऽणियय(त्तम्)से। तत्थ वीयं न वत्तव्वं, सत्तिसब्भावमाईसु।२७।" इत्यस्या गाथायां विमुच्य प्रथमपाद शेष पादत्रय अस्त्येव प्रत्यन्तरे। २ "यतस्तस्य"इति प्र०।

'सोऽष्टमी'मित्यादि, स पौषधोपवासः–उभयोः पक्षयोरष्टम्यादितिथि'मभिगृह्य' निश्चित्य बुद्ध्या 'अन्यतमां वे'ति प्रतिपदादितिथिमनेन चान्यास्तु तिथिष्वनियमं दर्शयति, नावश्यन्तयाऽन्यासु कर्तव्यः, अष्टम्यादिषु तु नियमेन कार्यः 'चतुर्थाद्युपवासिने'ति कर्तृलक्षणा तृतीया, पृथग्जनस्यानियतानि भक्तानि, मुमुक्षूणां सकृद्भोजनं, मध्यमजनस्य भक्तद्वयं, तत्र मध्यमां प्रतिपत्तिमाश्रित्य चतुर्थादितपोगणना, अतीतेऽहनि भुक्त्वा मध्याह्नात्परमेको भोजनकालः, द्वितीयेऽहनि भक्तद्वयच्छेदः, तृतीयेऽहनि चतुर्थभक्तकाले भुंक्ते इति चतुर्थभक्त-मुच्यते, एक उपवासः, कदाचित्तूत्तरपदलोपाच्चतुर्थभक्तमेव चतुर्थः, तदाद्युपवसति यस्तच्छीलश्च स चतुर्थाद्युपवासी, आदिग्रहणात् पूर्वगणनयैव षष्ठाष्टमादिसंवत्सरतपोविकल्पग्रहणं, स्नानमुदकेन, अनुलेपनं चन्दनकुङ्कुमकस्तूरिकादिना, गन्धा वासादयः पवित्रमादिभेदेनानेकविधाः, मालाऽऽह माल्यं-पुष्पप्रकारः, अलङ्कारो वलयकेयूरकटकादिः, व्यपाताः स्नानादयो यस्येति, न्यस्तो-निक्षिप्तः सर्वसावद्ययोगो येन, सर्वशब्दः प्रत्येकं, कुशास्तृणजातिरथपराः कल्याणादीनामनाश्रयास्तत्कृतः संस्तारः कुशसंस्तारः, संस्तीर्यतेऽसाविति संस्तारः, × × फलकमप्यथुपरि चम्पकादिपट्टखण्डं, आदिग्रहणाद्द्विदलवल्ककम्बलीपरिग्रहः, अन्यतममिति उक्तानां मध्ये यथालाभमास्तीर्य–विरचय्य प्रतनुनिर्देशानुष्ठेयः, अथवा स्वजनवत्यपेक्षया स्थानादिविधिनाऽनुष्ठेयः, तदाह-स्थानमूर्ध्वलक्षणं कायोत्सर्गाख्यं, वीरासनं–संहननयुक्तानां आसने जान्वधोभाग-तुल्यमश्विकादिनि विष्टस्यापनीताधोमश्विकस्य तथाऽवस्थानं वीरासनमुच्यते, निषद्या समस्फिगनिवेशनं पर्यङ्कबन्धादिः, वा शब्दो विकल्पार्थः, स्थानादि वा शयनं वा, अन्यतममिति यदेवाभ्यस्तं, आस्थायेति परि(प्रति)गृह्य, धर्मस्तु श्रुतचरणभेदाद्द्विधा, तत्र श्रुतधर्मो–वाचना-प्रच्छनाऽनुप्रेक्षास्वाध्यायधर्मोपदेशलक्षणः, चरणधर्मो ——— . . . . . . -जागरिका, धर्मे जागरिका धर्म-जागरिका, न तामसौ विकथाद्याश्रिता जागरिकेति, . . . . . . ." इति तत्त्वार्थभाष्यवचनव्याख्याने

(द्वितीयविभागे १३ पत्रे) प्रतिपदादिष्वनियतत्वं पौषधस्योक्तं, तत्र यदि कर्तुः शक्तिः स्यात् तदा तद्व्रतं कार्यमितरथा, अष्टम्यादिष्विव नियतं नेति शक्तिः कारणं न वाच्यं, तथा आदि शब्दद्योतितं न तासु तदकरणे अष्टम्यादितिथिष्विव प्रायश्चित्तमित्यादिरूपमपि तदनियतत्वे निमित्तं न वक्तव्यं, इति गाथार्थः ॥२७॥ अथ बीजद्वयाङ्गीकारे दोषमाह—

अनिययतिहिगणणाए, गणियत्तणउ न होज्ज नियतत्तं । पोसहवयस्स वच्छरि—पव्वे त्ति विरुद्धमुभयत्थ(वि) ॥२८॥

व्याख्या—'उभयत्रापि' प्रतिपदादितिथिषु पौषधानियमत्वनिबन्धनबीजद्वयेऽपि समनन्तरगाथोक्ते 'इति विरुद्धं' भावप्रधाननिर्देशाद् विरुद्धत्वं—दोषदुष्टता ज्ञेयमित्युपस्कारः, इतीति किं ?, पौषधव्रतस्य 'वत्सरपर्वणि' लोकोत्तरज्येष्ठपर्वणि आवरणया भाद्रपदविशदचतुर्थीरूपे 'नियतत्वं' तत्करणनैयत्यं "न भवे"त्सावधारणत्वाद्वाक्यस्य न भवेदेव, कोऽर्थः ? यदि शक्तिः स्यात्तदा तत्र पौषधः कार्यः, अशक्त्यसत्त्वे तु न कार्य इत्येवं विधिना सत्याश्चाशक्तौ तत्र तदकरणेऽपि प्रायश्चित्ताभावाच्च तदनियतत्वं भवेदिति भावः, तत्र हेतुमाह—'अनियततिथिगणनायां' अनियताः—पौषधग्रहणेऽनियन्त्रिता यास्तिथयोऽष्टमीचतुर्दशीपञ्चदशीव्यतिरिक्ताः प्रतिपदादिकमेवाख्यास्तासां या गणना—संख्या तस्यां 'गणितत्वात्' अनियततिथिगणनामध्यपतितत्वात्, तथाचात्र प्रयोगः—भाद्रपदविशदचतुर्थीपौषधग्रहणे भाज्या, तदनियततिथिमध्यगणितत्वात्, या तदनियततिथिमध्यगणिता सा पौषधव्रते भाज्या, यथा तृतीया, या नैवं सा नैवं, यथा चतुर्दशीति, नचैवं दृष्टमिष्टं वा शिष्टैः, तस्यां नियमत एव श्राद्धैः पौषधस्य क्रियमाणतयोपलम्भात्, सा यतितिवितताविहितस्वच्छगच्छवासिगीतार्थजनसम्मतत्वात्, तन्नाष्टमाकरणे प्रायश्चित्तसद्भावाच्च, तदर्थिना तु "पोसहउववासो उण, अट्ठमिचउद्दसीसु जम्मदिणे । पाणे णिधाणे चा-उमासअट्ठाहिपज्जुसणे ॥१॥" इति नवपदप्रकरणवृत्तिवचनं तथा "तं च चाउद्दसिअट्ठमि—पज्जोसवणाइपव्वदिवसेसु । साहुसगासे

पोसह-सालाए घरे य इय कुज्जा ।५।" इति श्रीमज्जिनवल्लभसूरिकृतपौषधविधिप्रकरणस्यान्वेष्यं, एवमन्यत्रापि सूक्ष्मेक्षिकयाद्रश्य मिति गाथार्थः ।२८। पुनरपि तदुक्तबीजद्वये निर्बीजताकरणप्रगुणं दूषणान्तरमाह-

सिलंगायरिएहिं, तह उद्दिट्ठासु पोसहोऽनिययं । उद्दिट्ठो बितियंगे, इह य अणियउ त्ति पुण दोसो ।२९।

व्याख्या-'तथे'ति पुनर्दूषणान्तरोद्बोधकवाक्यं, तेन न केवलं सांवत्सरिकपर्वणि पौषधानियततैव दोषावहा किन्तु 'शीलाङ्काचा(र्यैः)र्येण'-आद्याङ्गद्वयविवरणका(रैः)रेण 'द्वितीयाङ्गे' सूत्रकृताङ्गे लेपोपासकोपनयोपनिबद्धत्रयोविंशाध्ययने (४०८ पत्रे) उद्दिष्टासु-"महाकल्याणकसम्बन्धितया पुण्यतिथित्वेन प्रख्यातासु" तिथिषु 'पौषधः' पौषधोपवासव्रतं 'नियत'मित्यवश्यं कार्यतया 'उद्दिष्ट' उक्तो भवदभिप्रायेण 'इह च' तत्त्वार्थवृत्तौ, मध्यस्थपौषधशब्दस्येहापि संयोगात्पौषधो भवदुक्तपरिकल्पनया'ऽनियतो'ऽनिश्चित इति शास्त्रयोरुभयोरपि विरुद्धता मन्तव्येति, भावार्थस्तु-शीलाङ्काचार्याभिप्रायेण भवताऽष्टमीचतुर्दशीपञ्चदशीकल्याणकविशिष्टप्रतिपदादितिथयो नियताः पौषधेऽङ्गीक्रियन्ते, शेषा अनियताः, अन्यथोक्तनियततिथिव्यतिरिक्तासु तिथिषु तदग्रहणप्रसक्तिरङ्गीकृता स्यात्, अनिष्टश्चैतदायुष्मतः, तथा तत्त्वार्थभाष्यवृत्त्यभिप्रायेण च भवता चतुर्दश्यष्टमीपञ्चदशीरूपतिथिव्यतिरिक्तप्रतिपदादिष्वनियतत्वं पौषधस्य पूर्वोक्तबीजद्वयाङ्गीकारकृताङ्गीकृतं, तथाचान्योऽन्यं ग्रन्थयोर्दुर्निरोधो विरोधः स्यात्, किञ्च नियततिथिष्वपि नियमे सति पौषधाकरणे चतुर्गुरुकादेः श्राद्धजीतोक्तप्रायश्चित्तस्योक्तत्वात्, तथा च तत्सूत्रं-"नियमे पोसहसामाइयाइअकरणे चउगुरू अपारणए त्ति" तथा शक्त्यन्वयव्यतिरेकाभ्यामेव तत्करणाकरणाङ्गीकाराच्च तासामप्यनियततिथिमध्यपातप्रसक्तिरन्वेष्या, किञ्च प्रज्ञप्त्यां शंखशतकादिश्राद्धानां शक्तिसद्भावेऽपि नियततिथिपौषधाकरणं तास्वपि भवत्परिकल्पितायास्तदवश्यकर्त्तव्यतायाः असङ्गतत्वमेवावेदयतीति दिक् ।२९। अथ परोक्ततद्बीजद्वये दूषणान्यभिधाय स्वाभिमतं प्रतिपदादितिथिषु तदनैयत्ये बीजमाह-

किंतु तर्हि जइ कल्ला-णयाइ होज्जा ? तओ वयं कुज्जा । इहरा न वेत्ति ते पुण, नियमियदिणगहणओ न सया ।३०।

व्याख्या-'किन्तु' इति पदं स्वाङ्गीकृतबीजान्तरोद्बोधकं, तेन 'तर्हि'त्ति नियमिततिथिव्यतिरिक्तासु 'तासु' प्रतिपदादिषु तिथिषु 'यदि कल्याणकादि' एतदवसर्पिणीप्रभुभूतनाभेयादिजिनस्य च्यवनजन्मनिष्क्रमणज्ञाननिर्वाणदिनानि कल्याणकशब्दाभिधेयानि, तदादि-तत्प्रभृति-स्वरूपविशेषोपलक्षणमिदं 'होज्ज'त्ति भवेत् ? ततो 'व्रतं' पौषधाभिधानं कुर्यात्, श्रमणोपासक इत्युपस्कारः, 'इतरथे'ति तदभावे 'न वेत्ति'नैव कुर्यात्, इति प्रतिपदादिषु पौषधस्यानियतत्वे बीजमिति कटाक्षितोऽर्थः, अयम्भावः-अष्टमीचतुर्दशीपञ्चदशीषु तत्करणोत्साहवता किञ्चि-न्निमित्तान्तरमनपेक्ष्यैव पौषधः कार्य इति चतुर्दश्यादेर्नियतत्वं, प्रतिपदादिषु तु न निसर्गतस्तत्करणं किन्तु कल्याणकाद्युत्सवविशेषवशेनेति तासामनियतत्वमिति, अतो भाद्रपदविशदचतुर्थ्यां पर्युषणारूपलोकोत्तरोत्सवसद्भावात्तत्करणनैयत्यमायातं, न चात्र बीजे दोष-लेशोऽपि पूर्वपरिकल्पितः, उक्तविभाषया तन्निरासात्, तथा "पौषधोपवासातिथिसंविभागौ तु प्रतिनियतदिवसानुष्ठेयौ"विति हारिभद्री-यावश्यक(वृत्ति)श्रावकप्रज्ञप्तिवृत्तिपञ्चाशकवृत्तिवाक्यस्य नियतदिवसं नियतदिवसं प्रतीति प्रतिनियतदिवसं, तत्रानुष्ठेयाविति पदार्थसमर्थनया नियतानियतदिनेष्वेव तद्ग्रहणमनुमतं, तथाच भवत्परिकल्पितबीजद्वयसङ्गत्या प्रतिपदादौ तदनियततोक्त्या तदग्राह्यत्वमेव बलादायातं स्यात्, अनिष्टश्चायं दोषापन्नः, अस्मदभिप्रायेण तु कल्याणकोत्सवविशेषवशात् प्रतिपदादिष्वपि तन्नियतत्वं स्यात्, तथाच तास्वपि तद्ग्रहणमिति न विरोधलेशः, तस्मादेतदेव तत्र बीजमाधेयमिति, ननु तीर्थकृतां बहुत्वेन प्रतितीर्थकरं च बहूनां कल्याणकानां भावात्कल्याणकानां सर्व-तिथिष्वपि सम्भवात्सर्वदैव तद्ग्राह्यतयाऽऽयातमिति तटस्थमतिमपनेतुमाह 'ते पुण'त्ति प्राकृतत्वात्तानि पुनः कल्याणकानि न सदा भवन्ति, येन सर्वा अपि तिथयोऽत्र समाराध्या भवेयुः, किन्तु नियमितदिनेष्वेवेति भावः, तत्र हेतुमाह 'नियमितदिनग्रहणेन' नियमितानि-गणना-

विषयीकृतानि यानि दिनानि तेषां यद्ग्रहणं (तत)तया, तस्मात्, सर्वेषामप्यर्हतां कल्याणकदिनानि तान्येव, नान्यानीति, तथाहि "सेसाण वि एवं चिय, नियनियतित्थेसु विण्णेया ।३६।" इति यात्रापञ्चाशकसूत्रं(१८९ पत्रे), तद्व्याख्या—"शेषाणामपि न वर्द्धमानस्यैव ऋषभादीनामपि वर्त्तमानावसर्पिणीक्षेत्रापेक्षया एवमेव इह तीर्थे वर्द्धमानस्येव 'निजनिजतीर्थेषु' स्वकीयस्वकीयप्रवचनावसरेषु 'विज्ञेयानि' ज्ञातव्यानि मुख्यवृत्त्या विधेयतयेति, इह च यान्येव गर्भादिदिनानि जम्बूद्वीपभारतानामृषभादिजिनानां तान्येव सर्वभारतानां सर्वैरवतानां च, यान्येव चैतेषामस्यामवसर्पिण्यां तान्येव च व्यत्ययेनोत्सर्पिण्यामपीति गाथार्थः" अतो न सार्वदिकानि कल्याणकानीति बोध्यं, न च महाकल्याणकपदेन निर्वाणदिनमेकमेव गृहीतं भविष्यति, नान्यकल्याणकचतुष्टयीति वाच्यं "पंचमहाकल्लाणा, सव्वेसिं जिणाण हवंति, णियमेण। भुवणऽच्छेरयभूया, कल्लाणफला य जीवाणं ।३०।" इति यात्रापञ्चाशकसम्मत्या, तथा "पञ्चस्वपि महाकल्याणेषु त्रैलोक्यशङ्करं" मिति (सूत्रार्द्धं, व्याख्या—"पञ्चस्वपि, न पुनरेकस्मिन्नेव क्वचित् 'महाकल्याणेषु' गर्भाधानजन्मदिनादिषु 'त्रैलोक्यशङ्करं' जगत्त्रयसुखकारि, तीर्थकृत्त्वमित्यनुवर्त्तते।" इति आगमोदयस०मुद्रिते २३पत्रे) धर्मबिन्दुशास्त्रोक्त्या च पञ्चस्वपि कल्याणकेषु महाकल्याणशब्दोऽदुष्ट एवेति सदनुशिष्टिः, तथाच न सार्वदिकानि कल्याणकानि, तदभावाच्च न सार्वदिकं तत्सङ्कृतं पौषधग्रहणमिति गाथास्वरूपार्थः ।३०। अथ स्वरूपतस्तत्करणतिथिनिगमनमाह—

सत्थाणुसारओ नणु, पोसहगहणे तिहीउ एयाओ। आयरियायरणाओ, अन्नत्थ वि अणुमयं एयं ।३१।

व्याख्या—'ननु' निश्चितं 'शास्त्रानुसारतः' सिद्धान्तानुगमनेन 'पौषधग्रहणे' पौषधव्रताङ्गीकारे 'एताः' पूर्वोपवर्णितस्वरूपास्तिथयः कर्मतो भवन्तीति शेषः, तथाच सर्वग्रन्थकाराभिप्रायेण चतुर्दश्यष्टमीपञ्चदश्यः-शीलाङ्काचार्याभिप्रायेण च कल्याणकादिप्रसिद्धतिथयः पौषधाङ्गीकारे समायाता इति भावः, नन्वानन्दादिश्राद्धोपनयोपनिबद्धोपासकदशासु आनन्दस्य सार्द्धपञ्चवार्षिकपौषधाङ्गीकाराम्नातासिद्धान्तानु-

चारेण सर्वदिनेष्वपि पौषधाङ्गीकारः समायात एवेति चेन्न, तस्य तावत्कालावसाने पौषधपारणशब्दानभिधानेन तावन्मात्रपौषधाङ्गीकारा-ङ्गीकारेण च तदसाङ्गत्यमेवासादयति, गृहीतस्य पौषधस्यापारणे श्राद्धजीतोक्त्या चतुर्गुरुप्रायश्चित्तापत्तेः, न च तद्ग्रन्थानङ्गीकारो युक्तः "यद्यपि श्रावकाणां प्रकल्पादिग्रन्थेषु शुद्धिर्न दृश्यते, तथाप्यसौ श्रावकजीतकल्पादेः सकाशादवश्यमभ्युपगन्तव्यः, अन्यथोपासकदशासु यदुक्तं किल भगवान् गौतममुनिरानन्दं श्रावकं प्रत्यवादीत् 'तुमण्णं आणंदा! एयस्स अट्ठस्स आलोयाहि पडिकमाहि निंदाहि गरिहाहि अहारिहं तवोकम्मं पायच्छित्तं पडिवज्जाहि' इति तत्कथं घटेत?" इति पञ्चाशकवृत्तौ (३३ पत्रे) श्रीमदभयदेवाचार्यैस्तदङ्गीकारात्, ननु प्रागनुक्तोऽपि युक्तियुक्त(स्त)त्पारणशब्दः संयोज्य एवेति चेन्न, एवं तर्हि प्रथमदिनपौषधानन्तरं प्रतिमाप्रतिपत्तेः पुरा लाघवादेकमेव तत्पारणं किमिति भवता नाङ्गीक्रियते?, कल्पनाया उभयत्रापि साम्यात्, तथाचानायासेन निस्तुषः कलिः, नन्वेतावानर्थो यौक्तिक एव, न तात्त्विक, इति चेन्न, आनन्दातिदेशादिष्टस्य कामदेवस्य पौषधपर्याप्तिप्रतिमाऽङ्गीकरणयोरन्तरा तत्पारणात्मकपदानभिधानेऽपि तत्रैवाग्रतो यथा 'भगवच्चरणनमस्करणं विधाय मम पौषधपारणमुचित'मिति पाठोक्त्या प्रतिमाप्रतिपत्तेः प्राक् अनुक्तमपि पौषधपारणं यथाऽऽयु-ष्मताऽभ्युपगम्यते तथाऽत्रापि तत्पारणमनुक्तमपि तुल्ययोगक्षेमत्वेनाङ्गीकार्यमिति सिद्धान्तसम्मतिमप्यतिनिर्बन्धे गृहाण, अपरं "कुल्लागसं-निवेसे, गंतुं कहिऊण नियपनियगाणं। पोसहसालाइ ठिओ, इगदसपडिमाओ इय कुणइ ।१।" इति धर्मरत्नप्रकरणवृत्तौ श्रीदेवेन्द्रसूरयोऽपि पौषधं विनैवैकादशप्रतिमा आनन्दस्योक्तवन्तो, यदि पौषधपूर्विकास्तास्तस्य भवेयुस्तदा ते पुरा पौषधं न विस्मारयेयुरिति, ननु(उपासकदशासु) पौषधाङ्गीकारोऽस्यासार्थक एवोक्त इति चेन्न, कामदेवादेरिवास्य सुरकृतोपसर्गाभावप्रतिपादकतयैवास्य सार्थकत्वात्, निमित्तान्तरेण वा तत्सार्थकता भाव्या, अलम्प्रसङ्गेन, प्रकृतं प्रस्तूयते, न केवलमेतास्वेव तिथिषु तदनुमतकर्त्तव्यताकं, किन्त्वन्यत्रापि तिथिषु 'आचार्या-

चर(णातः)णया' रागद्वेषादिदोषविमुखविशिष्टलाभलिप्सुसंविग्नपूर्वाचार्याचरणात् 'ए(यं'ति) एतत्पौषधव्रतं 'अनुमतं' वांछितं उपधानतपोविशेषादिषु। तत्र हि-यद्यप्युपधानतपसि-पौषधव्रतं श्रीमन्महानिशीथे नोक्तं, तथापि समस्तगच्छीयगीतार्थसम्मततया सर्वेष्वपि धर्मगच्छेषु नियतं, तथा स्वस्वोपधानदिनप्रमाणतया तत्स्वस्वतपोयोगविधिप्रकरणेषु गीतार्थैर्निबद्धं दृश्यते, तैः कार्यमाणं चोपासकैरुपलभ्यते, तथाहि—"श्रावकश्राविकाणां तु एकस्मिन्नुपधाने अव्यूढेऽपि गुर्वाज्ञया अनुज्ञानन्दी विधीयमाना दृश्यते, परमेतैरहोरात्रपौषधद्दिनानि पश्चादपि शीघ्रं सविशेषं पूरणीयानि" इति श्रीमच्चन्द्रगच्छीयश्रीमदजितदेवसूरिनिर्मितयोगविधिप्रकरणे, तथा "पौषधग्रहणपुरस्सरमुपधानतपो विधेयमित्युपधानविधिरुच्यते" इति श्रीअभयदेवसूरिशिष्यपरमानन्दकृतसामाचारीग्रन्थे. तथा "पौषधक्रिया तु यद्यपि महानिशीथे साक्षान्नोक्ता तथापि यथा साधोर्योगेष्वतिशायिक्रियावत्त्वं सर्वप्रतीतं तथा श्राद्धानामप्युपधानेषु विलोक्यते" इत्याचारप्रदीपे रत्नशेखरसूरिकृते(१९पत्रे), एवञ्च सर्वगच्छीयगीतार्थाचीर्णत्वादुपधानेष्वस्मद्गुरुभिरप्यादृतं पौषधव्रतं, दृष्टं हि सिद्धान्तानिरुद्धमपि किञ्चित्संविग्नश्रुतधराचरितकल्पप्रावरणादिकं सर्वैरप्यङ्गीकृतं, उक्तञ्च धर्मरत्नप्रकरणे "कप्पाणं पावरणं, अग्गोअरचाउ झोलिआ भिक्खा। उवग्गहियकडाहय-तुंबयमुहदाणदोराइं।८२।" इत्यादि, एवञ्चोपधानतपस्यपि पौषधव्रतमाचरणयाऽनुसन्धेयं, तद्वच्चान्यापि तिथिः कैश्चिदाचार्यैराचीर्णतया नियतत्वेन स्वकृतग्रन्थेषु निबद्धा दृश्यते, मतानुरागीनिबद्धा तु न प्रमाणं, आचरणालक्षणाभावात्, तल्लक्षणं तु "असढेण समाइण्ण"मित्यादिकल्पभाष्योक्त्याऽवसेयं; ननु नवपदविवरणे (२७१ पत्रे) पौषधाधिकारे "यदुक्तं-पोसहउववासो उण, अट्ठमिचउद्दसीसु जम्मदिणे। नाणे निव्वाणे चाउमासअट्ठाहिपज्जुसणे।१।" इति पूर्वाचार्यसम्मतिभूतगाथाव्याख्यायां "अट्ठाहित्ति—अष्टाहिकाश्चैत्राश्वयुग्मासान्त्यापदिनेष्वष्टमीप्रभृतयो याः क्रियन्ते तासु कल्याणकदिनाष्टाहिकासु वा, एतेषु च दिनेषु सुश्रावकस्य जिनपूजातपोविशेषोद्यमो भणित एव, यदाह

धीरसिंहगणिः-संवच्छरचाउमासिएसु अट्ठाहियासु य तिहीसु । सवायरेण लग्गइ, जिणवरपूयातवगुणेसु ।१।" इति व्याख्यानेन श्रीयशोदेवोपाध्यायैरष्टाह्निकास्वपि पौषधमतिपादनात्सुगीतार्थाचीर्णं किमिति नाद्रियत ? इति चेन्न, एतत्सम्मतिगाथासमर्थनार्थं एतद्गाथा-समुत्थानमूलभूतायाः "पोसहउववासो उण, आहाराईनियत्तणं जं च । कायव्वो सो नियमा, अट्ठमीमाईसु पव्वेसु ।१।" इति मूलगाथायाः "पुष् पुष्टावित्यस्य धातोः पोषणं-पोषः-पुष्टिः, प्रक्रमाद्धर्मस्य, तं धत्ते-करोतीति पौषधः, पर्वदिनानुष्ठेयं धर्मकर्म, तस्मिन् , उप एवोपवसन मुपवासः पौषधोपवासः, पुनः शब्दो देशावकाशिकादस्य विशेषोपदर्शनार्थः, ततोऽयमर्थः-देशावकाशिकं तावत्प्रागुक्तस्वरूपं, पौषधोपवासस्तु कीदृशः ? इत्याह-पौषधोपवासः पुनराहारादिनिवर्त्तनं, 'यचेति' आहारः अशनपानखाद्यस्वाद्यभेदाच्चतुर्विधः, स आदिर्येषां देहसत्कारादीनां ते तथा, तेषां 'निवर्त्तनं' नियमनमाहारादिनिवर्त्तनं, तयत् सः इत्यर्थः, च शब्दो न केवलमाहारादीनां चतुर्णां निवर्त्तने पौषधोपवासः, किन्तु तदन्यतमनिवर्त्तनेऽपीत्यनुक्तार्थसमुच्चयार्थः, 'कर्त्तव्यो' विधेयः स 'नियमात्' नियमेना'ष्टम्यादिषु पर्वसु' अष्टमीचतुर्दश्यादिपुतसद-तिथिषु" इत्येवंरूपार्थव्याख्यानेन तैरेव उपवासाद्यन्यतमभेदेनापि पौषधव्यवस्थितेरुक्तत्वात् , अष्टाह्निकास्वपि तदाकूतेन आहारनिवृत्तिरूप-पौषधः सम्रत एवावगम्यते, प्रज्ञप्त्यां शंखाधिकारे अव्यापारपौषधे पौषधपदप्रयोगवत् , तथा "जद्दिवसमेगस्स बंभचेरपोसहो तद्दिवसं चितियस्स पारणगं, एवं अम्हे घरं गयाणि चेव कुमारगाणि" इत्यावश्यकबृहद्वृत्तौ (८२९पत्रे) केवलब्रह्मचर्येऽपि पौषधपदप्रयोगत्वात् , तथा "अष्टम्यां पौषधः उपवासादिकः, अष्टमीपौषधः, स विद्यते येषां ते अष्टमीपौषधिकाः-उत्सवाः" इति प्रथमाङ्गपिण्डैषणाध्ययनद्वितीयोद्देशके (३२७ पत्रे) उपवासेऽपि पौषधपदप्रयोगवदत्रापि केवलाहारनिवृत्तौ पौषधशब्दवाच्यत्वाविरोधात्, सम्मतिगाथोद्घोषिततिथिषूपवसनादेः कार्यस्य कार्यतया सर्वसम्मतत्वाचैवं तदभिसन्धिरनुसन्धेयः, न चैवं आहारादिषु चतुर्ष्वन्यतमपदेनापि व्रतावसरे पौषधः केनापि विद्वदन्तरेणो-

क्रीमियते, स्वस्वसामाचारीग्रन्थेषु तैस्तद्ग्रहणावसरे विधिवादेन सङ्कलितानामेवाहारादिपदानां चतुर्णामाचीर्णतयाऽऽम्नातात्, तथाहि–"करेमि भंते ! पोसहं–आहारपोसहं देसओ सव्वओ (वा). सरीरसक्कारपोसहं सव्वओ. बंभचेरपोसहं सव्वओ. अव्वावारपोसहं सव्वओ. चउव्विहे पोसहे सावज्जं जोगं पच्चक्खामि. जाव अहोरत्तिं पज्जुवासामि. दुविहं तिविहेणं. मणेणं वायाए काएणं. न करेमि न कारवेमि. तस्स भंते ! पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि" इति पञ्चाशकचूर्णिवाक्यात्तथा "करेमि भंते ! पोसहं–आहारपोसहं सव्वओ. सरीरसक्कारपोसहं सव्वओ. बंभचेरपोसहं सव्वओ. अव्वावारपोसहं सव्वओ. चउव्विहे पोसहे ठामि. जाव अहोरत्तिं पज्जुवासामि इत्यादि जाव वोसिरामि" इति प्रतिक्रमणचूर्णौ श्रीविजयसिंहसूरिवाक्यादेवं सर्वे सामाचारीग्रन्थाः अवसेया, अत एव तत्सम्मतिमूलभूतगाथाया एतद्व्याख्यानान्तरं एतदर्थे सर्वसंमततयाऽवरासनं (?), यद्वा "चकारो भिन्नक्रमस्ततः कर्त्तव्यः स चेत्यत्र योज्यः, शेषं पूर्वमिने"ति व्याख्यानान्तरं "तथा कल्याणकदिनाद्याहिकासु वा" इति व्याख्यानत एव कृतवन्त इति, तथाऽत्रार्थेऽप्योकेशगच्छीयबृहद्गच्छीयादिगीतार्थाः साक्षिभूता मध्यस्थभावेन स्वयमेव भवता प्रष्टव्या इति दिङ्मात्रमेतत्।३१। अथ पुनरप्यवशिष्टां पूर्वपक्षिणः कुशकाशसङ्काशकदाशालम्बनाभासं मूलतो निरस्यन्नाह–

नणु अणवज्जु कज्जं, कज्जुमिणं सव्वयाऽणुपेहं व । सच्चं सज्झायाइसु, गिइज्जइ वेलावयाईणि ।३२।

व्याख्या–'ननु' इत्याशङ्कायां 'इणं'ति एतत् पौषधलक्षणं 'कार्यं' करणीयं–कर्त्तव्यं 'सर्वदैव' प्रत्यहं, किम्भूतमेतत्कार्यं ? न अवद्यं अनेऽनवद्यं–निर्दोषमिति यावत्, तत्रान्वयदृष्टान्तमाह 'अनुप्रेक्षावत्' समयार्थविचारणावत्, यथा अनुप्रेक्षा निरवद्या सती सर्वदैव विधेया तथा पौषधव्रतमपि सावद्ययोगरहितत्वेन प्रतिदिनं कर्त्तुमनीहितमपि भवताऽङ्गीकार्यमिति पूर्वपक्षलेशः, तथाच प्रयोगः–पौषधव्रतं सर्वदा कार्यं, निरवद्यत्वात्, यद्यन्निरवद्यं तत्तत्सर्वदा कार्यं, यथा धर्मध्यानं, तथा चैतत्, तस्मात्तथेति । तत्राह 'सच्चं'ति सत्यं, सत्यमित्यर्थाङ्गीकारे

रार्यमिति युक्तं, परं सर्वदेति साध्यांशो न युक्तः इत्यर्थः, तत्रैव व्यभिचारमाह–'स्वाध्यायादिषु' सिद्धान्ताध्ययनाध्यापनादिरूपेषु 'वेलावय-आदीनि' वेला च वयश्च वेलावयसी, ते आदिर्येषां क्षेत्रादीनां ते वेलावयआदयस्ते तथा, 'गीयन्ते' प्रोच्यन्ते गणधरैरित्यध्याहारः, तथाच साध्यात्यन्ताभावव्द्वृत्तित्वेन व्यभिचारस्यात्रापि समावेशः, तथाहि–यत्र सर्वदा करणीयरूपसाध्यात्यन्ताभाववत्त्वं वर्त्तते स्वाध्यायादौ तत्रापि निरवद्यरूपसाधनस्य सत्वात्, तथा पक्षादित्रयवर्त्तित्वेनास्य हेतोरनेकान्तिकत्वं, नन्वध्ययनाध्यापनादीनामपि सर्वदा कार्यत्वेनो-क्तदोषानवकाश इति चेन्न, सिद्धान्ते सूत्राध्ययनाध्यापनादौ कालव्यक्ताव्यक्तप्राप्ताप्राप्तपरिणतापरिणतातिपरिणतादिविशेषाणां व्युत्पादनात्, तथाहि "नो कप्पइ निग्गंथाण वा निग्गंथीण वा चउहिं महापाडिवएहिं सज्झायं करेत्तए, तं० आसाढपडिवाते. इंदमहपडिवाते. कत्तियपडिवाते. सुगिम्हपडिवाते" तथा "नो कप्पइ निग्गंथाण वा निग्गंथीण वा चउहिं संज्झाहिं सज्झायं करित्तए, तं० पढमाते पच्छिमाते मज्झण्णे अड्डरत्ते" (स्थानाङ्गे २१३ पत्रे) तथा "दसविधे अंतलिक्खिते असज्झाइए पन्नत्ते, तं० उक्कावाते दिसादाहे गज्जिते विज्जुते निग्घाते जूयते जक्खालित्ते धूमिता महिता रतउग्घाते। दसविधे ओरालिए असज्झातिते पन्नत्ते, तं० अट्ठीमंसे सोणिते, असुतिसामंते सुसाणसामंते। चंदोवराते सूरोवराते पडणे य रायवुग्गहे।।१।। उवस्सयस्स अंतो उरालिते सरीरगे पंचिंदियाणं जीवाणं असमारंभमाणस्स" इत्यादि श्रीस्थानाङ्गे (४७५ पत्रे), तथा "जे भिक्खु अवत्तं वाएज्जा वाएंतं वा सातिज्जति" (निशीथ १९ उद्देशके १९) सूत्रे "अंधंजण० गाहा, जाव कक्खादिसु रोमसंभवो ण भवति ताव अवत्तो, तस्संभवे वत्तो, अहवा जाव सोलसवरिसो ताव अवत्तो परतो वत्तो, जइ अवत्तं वाएति 'इयरं'ति वत्तं न वाएति ता (तस्स) आणादिया दोसा चउलहुयं(च)पच्छित्तं × × 'जे भिक्खु अप्पत्तं वाएति०' अमासं एयस्स अत्थो अपात्रसूत्रे गत एव, आदी य अदिट्ठे भावे त्ति, तहावि इह असुन्नत्थं भण्णति–अहदत्तसुत्तस्स अपत्तसुत्तेण य चउभंगो भाणियव्वो, परियाय० गाहा–परियाओ

दुविहो–जम्मणओ पवज्जाए य, जम्मणओ सोलसण्हं वरिसाणं आरतो अवत्तो, पवज्जाए तिण्हं वरिसाणं पकप्पस्स अवत्तो, जो वा जस्स सुयस्स कालो वुत्तो तं अपावेंतो अवत्तो, सुएण आवस्सगे अणहीए दसवेयालियस्स अवत्तो, दसवेयालिए अणहीए उत्तरज्झयणे अव्वत्तो, एवं सवेत्र, एत्थ य परियाये सुते य चउभंगो कायवो–[1]परियाएण सुएण वि वत्तो १। परियाएण वत्तो सुएण अव्वत्तो २। (परियायेण अव्वत्तो सुएण वत्तो ३। परियायेण सुएण वि अव्वत्तो) ४। पढमे भंगे अवाएंतस्स सेसे वाएंतस्स आणादिया दोसा चउलहुं च (पच्छित्तं)" इत्यादि श्रुताध्ययनाध्यापनादौ पेलावयःप्रभृतिवस्तुगवेषणं निशीथसूत्रभाष्यचूर्णिवाक्यैरवसेयं, तथाच यथा श्रुताध्ययनादिष्वनवद्येष्वपि शास्त्रोक्तोऽवसर एवादेयतयोपात्तस्तथाऽनवद्यस्यापि पौषधस्य विहितावसर एवादेयत्वमिति युक्तमुत्पश्यामः इति, तथाच पौषधस्य पर्वदिनानुष्ठेयत्वमेवायातमनुमन्तव्यं[2], नन्वष्टमीहानौ सप्तम्यामपि भवता पौषधाङ्गीकारपक्षकक्षीकारात्पर्वमात्र एव तदङ्गीकरणीयमित्यभिसन्धिसन्धा कथं तथ्यीकार्या ?, तदेकदेशे बाधसद्भावादिति चेन्न, अष्टमीहानावष्टमीकृत्यकरणस्य स्थानान्तरानवाप्तौ सप्तम्यान्तस्तद्भोगबहुत्वसद्भावात्सप्तमीकृत्यस्येवानन्यगत्या (तत्)स्थानतया गीतार्थैरङ्गीकारात्, ननु तर्हि चतुर्दशीहानौ त्रयोदश्यामपि तद्वदेव पाक्षिककृत्यं चतुर्दशीतिथिविधेयं कथं विधेयतया नाद्रियते ? इति चेन्न, चतुर्दश्यां पाक्षिककृत्यस्य कालिकाचार्यैराचरितत्वात्, पौर्णमास्यान्तु पाक्षिककृत्यकरणीयत्वमागमानुगामि, तेन चैत्यपरिपाटि-मुनिजनवन्दन-पाक्षिकातिचारालोचना-ऽऽलोचनास्थानीयचतुर्थतपोविशेषविधानादिपाक्षिककृत्यं

---

1 "पढमभंगो दोसु वि वत्तो बितिओ सुएण अव्वत्तो ततिओ वएण अव्वत्तो. चरिमो दोहिं वि, अव्वत्ते वाएंतस्स पढमभंगिल अवाएंतस्स आणादिया दोसा मासलहु च" इति नि०चू०प्र०।

2 यत उक्तं "अष्टमी दिने. अष्टम जिन पूजो, आठ करमने. हणवा जी। आठ पहोरी. पौषध करोने, त्रिकाले त्रिअष्ट. जिन वांदवा जी ॥ आठ पहोरी. पहेली अष्टमीए, पौषध आदि. किम निषेधूं जी ?। हे शासन सुर !. पर्वतिथि ते, अपर्व कही. किम विराधूं जी ? ॥१–४॥"

पाक्षिकार्थमनन्तरतिथावपि चतुर्दश्या हानौ सदागमाऽविगीतपूर्णिमारूपपाक्षिकतिथौ कार्यमिति सम्प्रदायः, सत्यां च भूतेष्टायां (चतुर्दश्यां) पूर्णिमापर्वान्तराविरोधात्तस्यामेव पाक्षिककृत्यमनुसन्धेयं, आचरणाया अपि कथञ्चिदागमानुपातित्वात्, त्रयोदश्यान्तु तत्कृत्यकरणे आगमाचरणयोरन्यतरस्याप्यनाराधितत्वं स्यात्[1], चतुर्मासकचतुर्दशीहानौ श्रीजिनप्रभाचार्यैरप्येतस्या एव युक्तेराश्रितत्वात्, तथाहि–"नवरं चाउम्मासियचउद्दसीह्रासे पुण्णिमा गुज्झइ, तेरसीगहणे आगमआयरणाणं अन्नतरंपि नाराहियं होज्जा" इति विधिप्रपायां, पाक्षिकपर्वहानौ त्रयोदश्यां पाक्षिककृत्यविधानाभिप्रायस्तु तेषां सम्यगनवगम्यः सम्प्रदायसाध्यश्चेति परम्पराऽनुयायिनामाचरणाङ्गीकारानवकाशे आगमोक्ताङ्गीकारस्य न्याय्यत्वात्, न चैकतरस्य अनवकाशे अन्यतरस्याप्यनवकाशता युक्ता, लौकिकलोकोत्तरव्यवहारभङ्गप्रसङ्गात्, नन्वेवं विशिष्टपुण्यकरणीयकरणकारणभूतदिनद्वयीव्ययीभावमेष्यतीति चेन्न, पञ्चदशीहानौ भवतोऽप्येवमेव प्राप्त्योत्तरत्वात्तदिति कण्टकोद्धारलेशः[2] इति गाथार्थः ।३२। अथ पौषधतिथिस्वरूपनिगमनोपदर्शनपुरस्सरं तत्प्रतिपादकस्थानान्तराभिधानकथनद्वारेण तत्करणविधिं दर्शयन्नाह–

**पोसहतिहिपरमऽत्थो, इय कहिओ ससमयाणुसारेणं । करणविही जिणवल्लह–कयपोसहपयरणाउ मुणो ।३३।**

व्याख्या–'इत्य'मुना पूर्वोक्तप्रकारेण 'पौषधतिथिपरमार्थः' पौषधकरणे नियुक्तास्तिथयः पौषधतिथयस्तासां परमार्थ–एतासु तिथिषु

---

१ यतः "पूनम वृद्धिए पहेली पूनमे, पाखी पडिकमणुं करे तूं। पूनम हानिए तेरसे पाखी, करे अन्याय केम तूं ।१।"

२ अन्यगोक्तं–"शासन नायक. वीर जीणंद वांदी, नमुं ऋषभादि. सुख सिंधु जी । अमावसने. पूनम अधिके, चउदस किम. विराधुं जी ?॥ उदय चउदस. तेरस मनारी, किम पौषधादि निषेधुंजी ?। सिद्धायिका देवी. शुद्ध बुद्धि देजो, पर्वतिथि तेह. आराधुं जी ॥१–४॥"

"चौदश विराधि पहेली पूनमे, पाखी–चोमासी करे तूं । पंचांगी पाठे बे तेरस नहीं, होय तो बताव तूं तूं ।१।"

पौषधव्रतं कार्यमित्येवंरूपमैदम्पर्यं पौषधविधिपरमार्थः, स 'कथितः' तत्प्ररूपकसिद्धान्ताक्षरसम्बद्धवाक्यप्रबन्धविषयीकृतः, प्रकरणान्मयेत्यध्याहार्यः, केन साधनभूतेन ? 'स्वसमयानुसारेण' जैनागमपुरस्कारेणेत्यर्थः, इत्यनेन स्वकपोलकल्पनाकल्पितत्वशङ्का दूरापास्ता द्रष्टव्या, 'करणविधिः' प्रस्तावात्पौषधस्य विधानपद्धतिः पुनः 'जिनवल्लभकृतपौषधप्रकरणात्' जिनवल्लभैः-जिनवल्लभनामधेयैः श्रीमन्नवाङ्गविवरणकरणाप्तशिष्टसंसन्मध्यमधोभूरिश्रीमदभयदेवसूरिचरणोपजीविश्रीमज्जिनवल्लभसूरिभिरिति यावत्, कृतं-विहितं यत्पौषधप्रकरणं-पौषधव्रतविधानविधिप्रतिबद्धशास्त्रविशेषः, तस्माज्जिनवल्लभकृतपौषधप्रकरणात्, ज्ञेय इत्यध्याहार्यमिति गाथार्थः।३३। अथ विबुधजनेष्वभ्यर्थनारूपां गाथामाह–

मइमंदयाइवसओ, जं लिहियं इह य आगमोत्तिण्णं। मइमं दयाइ वसओ, सोहेउ तयं सुहीवग्गो।३४।

व्याख्या–'इहे'ति अस्मिन्प्रकरणे 'य'दिति सामान्यवाचकपदनिर्देशादनिर्धारितस्वरूपं किमपीति वाच्यवाचकं 'आगमोत्तीर्णं' समतिक्रमितजिनागमं 'च'शब्दात्पूर्वाचार्यपारम्पर्योत्तीर्णं च 'लिखितं' अक्षरविन्यासीकृतं, मयेत्यनुक्तमपि कर्तृवचनं निष्ठाप्रत्ययानुकूल्यादत्रावसेयं, आगमोत्तीर्णलिखने निदानमाह–कुतः ? 'मतिमन्दताऽऽदिवशतः' मतेर्या मन्दता-सकलागमपरमार्थादर्शित्वेन कुण्ठत्वं, सा आदिर्येषां प्रमादव्याक्षेपानवस्थानानां, ते मतिमन्दतादयस्तेषां वशः-आयत्तता. तस्मात् मतिमन्दतादिवशतः "पञ्चम्यास्तसिल्" (पा०५।३।७।), इयता वाक्येन नामनो जिनागमोत्तीर्णवाचकत्वे सम्यक्त्वनाशात्पाराञ्चितप्रायश्चित्तमूलत्वमावेदितं भवतीति बोध्यं, तदागमोत्तीर्णं 'सुधीवर्गः' सुष्ठु-आगमपरिकर्मिता धीः-बुद्धिर्येषां ते सुधियस्तेषां वर्गः-समूहः, स 'शोधयतु' तदपसारणेनैतत्प्रकरणं निरवद्यं करोत्विति प्रेरणाप्रत्ययोपादानं तस्य विशेषतः शोधने प्रत्युपयोगप्रदर्शनपरं, किम्भूतः सः ? 'मतिमान्' मतिः-त्रिकालविषयिणी धिषणा, सा विद्यते यस्मिन्नसौ, तस्यास्त्रिकालविषयित्वं तु तथाविधज्ञानावरणीयकर्मक्षयोपशमसमुत्थौत्पातिक्यादिविशेषात्, ननु स्वकार्यैकरणव्यासक्तत्वात्कथं सशोधयिष्यतीत्यत आह–

पुनः किं भूतो ? 'दयाया वशगः' दयेत्यनुग्रहोपलक्षणं, तेन दया-निष्कपट(निश्छल)परानुग्रहाशा, तस्याः वशगो-वशवर्त्तीत्यनेन तस्य परोपकारितानिरसिस्नमावेदितं, तथाविधस्य तु कियदेतदिति भावः, इति गाथार्थः ।३४। अथाधिकृतप्रकरणसमर्थनस्वरूपं गाथाद्वयेनाह-

इय सुय-सुयहरसम्मय, कइवयवयणेहिं पयरणं सुहियं। लिहियं सिहि-जलनिहि-गुह, मुह-विहि-वरिसे सुहरिसेणं ।३५।
जुगवरजिणचंदाणं, आणं लहिऊण कयपमोयाणं । सुपमोयपयरएण य, गणिणा "जयसोम" नामेणं ।३६।

व्याख्या-'इय' इत्यमुना प्रकारेण 'युगवरजिनचन्द्राणां' युगे वराः-प्रधानाः युगवरास्ते च ते जिनचन्द्राश्च श्रीमज्जिनचन्द्रसूरयस्तेषां 'आज्ञा'मादेशं 'लब्ध्वा' समासाद्य "जयसोम"नाम्ना गणिना प्रकरणं 'लिखित'मक्षरविन्यासीकृतमिति सम्बन्धः, कैः साधनभूतैः ? 'श्रुत-श्रुतधरसम्मतकतिपयवचनैः' श्रुतश्च-आगमः, श्रुतधराश्च-बहुश्रुताः श्रुतश्रुतधरास्तेषां सम्मतानि-संवादीनि कतिपयानि-कियन्ति यानि वचनानि तानि तथा, तैः, किम्भूतं प्रकरणं ? 'सुहितं'-अतिशयेन हितकारि:, कदैतल्लिखितमित्याह 'शिखि-जलनिधि-गुहमुख-विधि-वर्षे' शिखिनो-वह्नयस्ते च कविसमयेन त्रयः, जलनिधयः-समुद्रास्तेऽपि लोकोक्त्या चत्वारः, गुहमुखानि-कार्त्तिकेयवदनानि. तानि च षट्, विधि-र्ब्रह्मा. स चैकः, तन्मिते वर्षे-शरदि, अङ्कानां वामगत्या १६४३ वर्षे, सुहर्षेणेति कर्तृविशेषणं ध्येयं, किम्भूतानां युगवरजिनचन्द्राणां ? 'कृतप्रमोदानां' कृतः प्रमोदो-हर्षो यैस्ते. तेषां, किम्भूतेन "जयसोम"नाम्ना गणिना ? 'सुप्रमोदपदरतेन' सुष्ठु-अतिशयेन प्रमोदानां-प्रमोदमाणिक्यगणीनां पदोः रत-आसक्तस्तथा, तेनेति गाथाद्वयार्थः। ३५-३६। (जीर्णाजीर्णप्रतिद्वयेऽप्यष्टमगाथावृत्तौ नवाङ्केन ३६ अङ्काः)
इति वाचनाचार्यश्रीप्रमोदमाणिक्यगणिचरणारविन्दचञ्चरीककरणिपण्डित"जयसोम"गणिना समर्थिता पौषध(षट्त्रिंशिका)प्रकरणवृत्तिः ।

ग्रन्थकारप्रशस्तिः-श्रीमत्खरतरगच्छे, श्रीजिनमाणिक्यसूरिगुरुपट्टे। चन्द्रकुलाम्बरचन्द्रा, उदीयुरुदयाय जिनचन्द्राः ।१। सम्यक्परीक्षणाद्ये,

परीक्षका गौर्जरावनावासन्। मवचनपरीक्षकायाः, रीहडवंश्या अपि मकटाः ।२। तेषां राज्ये विजयिनि, रेजुः श्रीक्षेमराजराजानां। शिष्याः गुलब्धलक्षाः, प्रमोदमाणिक्यगणिमुख्याः ।३। तत्पदपङ्कजभृङ्गः, सद्गुरुरागादवाप्तसुखसङ्गः। समतसितसमयभावः, शिष्यो जयसोम-गणिनामा ।४। स्वोपज्ञस्य विवरणं, कृतवानिह पौषधप्रकरणस्य। भूता-ब्धि-रसे-न्दु(१६४५)मिते, वर्षे श्रीनेमीजन्मदिने ।५। युग्मम्। विवर्थं यदत्र कथमपि, कथितं जिननाथशपथदानेन। अभ्यर्थये विपश्चि-द्गणः तच्छोधयतु इति ।६। श्रीमज्जिनदत्तानां, श्रीमज्जिनकुशल-सूरिराजानां। कुर्वन्तचिरकालं, नन्द्यादानन्दसुखदायि ।७। इति श्रीपौषधषट्त्रिंशिकाप्रकरणविवरणं समाप्तम्।

संवति १६५५ प्रमिते श्रीस्तम्भतीर्थवेलाकूले कार्तिकसुदित्रयोदशीवासरे बुधवारभासुरे रङ्गवैराग्यभङ्गीवासनासमाहतकठोरतरसाधु-क्रियासमाचार-कृतकुवादितिरस्कार-श्रीसाहिसमक्षं दूरीकृतकुमतिकृतोत्सूत्रासभ्यवचनमयप्रवचनपरीक्षादिशास्त्रव्याख्यानविचार-विशिष्टस्वेष्ट-मन्त्रादिप्रभावप्रसाधितपञ्चनदःपतिसोमराजादियक्षपरिवार-अधरितामधुमाधुर्यवर्यवाक्चातुर्यरञ्जितनिखिलभुजालभूपालमौलिमौलिमाणिक्य-प्रभापटलकश्मीरजजलधौतचरणकमल-जलालदीश्रीअकबरपातिसाहिवितीर्णपाढीयाष्टाहिकाऽमारि-वर्षावधिश्रीस्तम्भनोर्थीयजलध्यन्तर्वर्त्ति-जलचरजीवततिम(?)रक्षणसमुद्भूतप्रभूतयशःसम्भार-श्रीसाहिप्रदत्तयुगप्रधानविरुदधार-जाग्रद्भाग्यसौभाग्यप्राग्भार-शासनाधीश्वरश्रीमत्-श्रीवर्द्धमानजिनपट्टप्रतिष्ठितपञ्चमगणधरश्रीसुधर्मस्वामिप्रमुखयुगप्रधानाचार्याविच्छिन्नपरंपरायातश्रीचन्द्रकुले चन्द्रश्रीउद्योतनसूरि-श्रीवर्द्धमा-नसूरि-श्रीजिनेश्वरसूरि-श्रीजिनचन्द्रसूरि-श्रीअभयदेवसूरि-श्रीजिनवल्लभसूरि-श्रीजिनदत्तसूरिसन्तानीयश्रीबृहत्खरतरगणशृङ्गारमौक्तिक-हारश्रीजिनमाणिक्यसूरिपट्टोदयाचलप्रभाकर-विजयमानयुगप्रधान-श्रीजिनचन्द्रसूरिपुरन्दराणां आचार्यश्रीजिनसिंहसूरि-श्रीसमयराजोपा-ध्याय-श्रीरत्ननिधानोपाध्याय-पं०पुण्यप्रधानादिशिष्ययुतानां सदुपदेशेन × ×। एतावदेव प्राचीन प्रत्यन्तरे लेखकादीनां प्रशस्तिरस्ति)

जनरनरनधर[1] ! धरणधर !, नवकमलसरलदलनयनपर ! ! [2]गमततमतमतकरसकल[3] !, वरनरवरगणनतपदयमल[4] ! !१। गजकर[5]कर[6]मदनग[7]दहन !, मम परभर[8]मऽपहर वरमहन[9] ! ! धनद[10]धनदसमशमसदन[11] !, परनरमतमथन ![12] प्रम[13]वदन ! !२। [14]परमपरमपदपदवरद !, भ-न-वं पदनतमनरमपकगद[15] ! ! [16]भवभवभयभरहरणपर[17] !, [18]मलमलकलकम[19]-न-लसचरणचर[20] ! !३। जय गम[21]मदननयन[22]दमद !, जय सकलजनक[23]कलवचनवद ! ! शशकरकरवररद[24]नचय[25] !, घनघनघन[26]करणशरणसनय ! !४। एवं निर्मलचित्तभावसलिलस्नातैः स्नपिताऽद्भूतं, चञ्चत्केतलवर्णचित्रसुमनः श्रेणीभिवध्यद्द्रुतम् । श्रीमत्पार्श्वजिनोऽर्चितः पृथुगुणैः स्तोत्रैः श्रताग्नीकरः, भूयात्सौख्यकरः 'प्रमोद'सुयशो 'माणिक्य'हीराकरः ।५। इति श्रीपार्श्वनाथस्तवनं केवलाक्षरमयं सम्पूर्णम् ।

वन्दे सुभाव[27]दसुसद्धकरं[28] समोर्क, सिद्धान्तरासिततनन्नकर्द[29] न शोकम् । मन्दारकागकरकम्पितपङ्कजातं[30], दिव्यङ्गनादिवग[31]-वन्दितगात्रतातम् ।१। सपदिताऽऽशविदितं भवपातनार्थं[32], सन्तापनाशनपरं सुरवं[33] रतावम् । रम्याननं रविनतं विशदं तमीशं, मर्त्यावली[34]मतवदं[35] सुमदं[36] दमीशम् ।२। दन्तावलं दरवनच्छितये नमन्तं[37], निर्वाणदं निपुणनिर्मितकं[38] नितान्तम् । गर्वाङ्गजाऽगनगभिन्समताऽभिरामं, सद्योगभासुगतिक्रमदातिकामम्[39] ।३। सत्शासनेशलसदंशुरदं दयारं[40], सर्वाऽभिसंशयभिदं[41] वरनादसारम् ।

---

१ जनर ! । २ गताः ग(दगपाटा)ऽसाले-वि(स्मो मत)अभीष्टः वै तस्य । ३ सह यः । ४ युगल । ५ शुंडा । ६ हस्त । ७ वृक्ष । ८ वैरीसमूहं । ९ पूजनं । १० दाने । ११ गृहं । १२ वैरिमनुष्याणां मतं मथ्नातीति । १३ प्रहृष्टं । १४ परम-प्रकृष्टो यः पदः (परम)परमपद -मोक्ष-, तत्पदेच्छां ददातीति । १५ हे गतकुत्सितरोग ! । १६ संसारोत्पन्न । १७ सागर । १८ मत्रे स(ह्रिंति) तदेशागु...... संवादम...... मनोल्या......न स्थाः । १९ हे नी(नि)र(ऽलस) ! । २० चारित्रे चरतीति । २१ मरण । २२ उपशमद । २३ मधुर । २४ दन्त । २५ न विद्यते (भय सवनः) सा सनो(? । २६ निविडमेघ । २७ शोभनचित्ताभिप्रायः । २८ वसूनां द्रव्याणां राद्धं-समूहं करोतीति । २९ सुरदं । ३० कम्पितः पाणग्रहो येन(ते)। ३१ दिवि-आकाशे गच्छन्तीति दिवगाः-देवादयः । ३२ प्रवहणं । ३३ सुशब्दं । ३४ मनुष्यावली । ३५ अभीष्ट(वक्तारं) । ३६ शोभनपर्षदं । ३७ प्रणमन्तं । ३८ निर्मितं कं-सुखं येन तं । ३९ अतिक्रान्तः कामः कामः दर्पसार । ४० दयया कृपया राजतेव शीलं । ४१ अभि-सामस्त्येन संशयान् भिनत्तीति ।

सन्नाक[१]नासद[२]कसङ्गरजःसमीरं, वर्य[३] जनाऽवमऽजरं वरसारधीरम् ।४। एवं मया विपुलहारविचित्रचित्र-स्तोत्रेण पार्श्वजिनपो जन-पस्तुतोऽयम् । भक्त्या दयातिलकभूषितभालदेशः, सौख्यं ददातु 'जयसोम'मुनेर्जिनेशः ।५। इति श्रीपार्श्वनाथस्तवं हारचित्रमयम् ।

लसत्पङ्कजाऽऽमोदनिश्वाससारं, ससारं[४] सुरेन्द्रोल्लसच्छ्रीविसारम्[५] । विसारं[६] सुखाम्भोनिधौ सद्विजेशं, द्विजेशं कुकर्माहिभङ्गे जने ऽम् ।१। जने शङ्करं पार्श्वनाथं सुराऽऽसं[७], सुराऽऽसङ्गसंस्तूयमाऽऽनाऽशिवासम्[८] । शिवाऽऽसं[९] हि कल्याणवल्लीपयोदं, पयो[१०]दन्तपंक्तिकृताऽनन्तमोदम्[११] ।२। तमोदं वरं पार्श्वनाथं विमायं[१२], विमाऽऽयं[१३] हितं संस्तुवेऽहं सदाऽऽऽयम्[१४] । सदा यं द्विजिह्वाङ्कितं तं वृपाङ्कं[१५], वृपाङ्कं[१६] महाकामनाशे सुनाकम्[१७] ।३। सुनाकस्थनाकिव्रजस्तूयमानं, यमानक्ष्यमभाऽऽरवं तं सदानम् । सदानन्दकारं खगश्रीसमानं, समानं[१८] नतमवलक्ष्मीवितानम् ।४। इत्थं विश्वप्रकाशिप्रबलपरलसज्ज्ञानसद्ध्यानधाम्नः, श्रीपार्श्वस्य प्रशंस्तपृथुतरयशसः सौख्यकृद्धामनाम्नः । स्तोमं चक्रे विमुक्तग्रहणयुतमदः मोल्लसद्भोगभाजः, हर्षः माग्भारभास्व'जयशश'मुनिना रङ्गकृज्जैनराजः ।५। इति पार्श्वस्तवं शृंखलाचित्रमयम् ।

सन्तोपधर्मसदनं[१९] स(द)नन्द्य[२०]सारं, दत्ताङ्घ्रिमोक्षसुगतिं सुगतिं[२१] सुसारम् । मेघोल्लसच्छविपदं विपदऽन्तकारं, सेवे [२२]मनःप्रभव-सम्भवसङ्गवारम् ।१। कैवल्यवह्निकृदभं[२३] कदभन्ददारं[२४], शाल[२५]त्रयीसहितसंहित[२६]सङ्गकारम् । नम्रामरेन्द्रभविकं भविकं[२७] समानं[२८],

---

१ स्वर्गं । २ कुत्सित । ३ वर्य-पूज्यं । ४ सह र(र)या-लक्ष्म्या वर्तेत्येवं शीलः । ५ विस्तीर्णं । ६ विबभं ? (मत्स्य) । ७ सुष्ठु राजिताऽऽशा-दिशो येन । ८ अशिवान्-उपद्रवान् असतीति । ९ शिवे-मोक्षे असति-उपविशतीति । १० दुग्धवत् । ११ हर्षे । १२ विगतमायं । १३ वि-विशेषेण मा-लक्ष्मी-श्री तस्या आयो-लाभो यस्मात् । १४ सच्छोभनं आ-समन्तादयो-भाग्यं यस्य स । १५ वृषो-धर्मो अङ्कोऽभिज्ञानं यस्य । १६ ईशं । १७ सिंहासनं । १८ पूजा । १९ गृहं । २० सद्भिः-सज्जनैः न इ (?) नन्द्यः-नन्दनीयः, स चासौ सारश्च । २१ सच्छोभना गतिर्यस्य तं । २२ मन.प्रभव(स्य-कामस्य) सम्भव(स्थाने) योनौ सं(गं वारय)तीति तं । २३ कैवल्य ए(व)वह्निः (कैवल्य)वह्निस्तत्र(कं-जलं ददातीति क(द)-मेघ इ(व)भातीति तं । २४ कत्कुत्सितः योऽमन्दो-ऽमङ्गलस्तं दारयती(ति) । २५ गढ । २६ स-सम्यक्प्रकारेण हितं करोतीति । २७ भविकं-कल्याणं यस्मात् । २८ सह मानेन-पूजाप्रकारेण वर्तते यः ।

गम्भीर्गि भासितनतुं तत[1]नुसमानम् ।२। इक्ष्वाकुवंशसुभदं [2]सुभदन्तमीशं, संवीतसंयमधुरं[3] मधुरं[4] दमीशम् । वन्दे [5]दिताऽऽ(शु)सु (?)-प्रभवं प्रभवं गमानां[6], निर्नाशिताऽऽपतमसं तमऽसङ्गमानाम् ।३। वन्दे जिनं नवरदं वरदं जनानां, दुर्दान्तदान्तकरणं करणं[7] धनानाम् । गम्भादनपरिवृधं[8] विबुधं[9] सुशीलं[10], वामाऽङ्गजं हि सुपदं सुपदं सुनीलम् ।४। इत्थं मयाऽत्र विहितं विहितं तवेश !, स्तोत्रं [11]विचित्र-परमं परमङ्गलेन[12] !। सौख्यानि मे वितनुताऽतनुताऽऽत्तशस्य !, देवेन्द्रसद्गुगजयशो 'जयसोम'कस्य ।५। इति श्रीपार्श्वजिनस्तवनम् ।

भविकमानुरागद्रुमकारकं, सकलशाखलताजलदायकम् । जलदवर्णधरं हरिणाङ्कितं, नमत पार्श्वजिनं तिमिरीस्थितम् ।१। प्रबल-मोहगमल्लरन[13]प्रभं, सुमतिचित्रशिखण्डिज[14]सन्निभम् । मदनपङ्ककदं सुगुणान्वितं, नमत० ।२। विदलिताशुभकर्ममतङ्गजं, प्रणमितेश्वर-मलगन्धनम । नरकनिर्जरपङ्कजपङ्क्तितं, नमत० ।३। अधरकान्तिविनिर्जितविद्रुमं[15], शमधरं शिवमार्गवरद्रुमम् । हरिवराशनसंस्थित[16]मऽर्चितं, नमत० ।४। श्रीमत्पार्श्वजिनेन्द्रमिन्दुसदृशाऽऽस्यं तापपापापहं, ऐक्ष्वाकान्वयनिर्मलाम्बुधिनिशानाथं नमस्याम्यहम् । देवेन्द्राऽमरमौलिमौलि-स्त्रिगरश्रेणिमकान्तिकमं, कल्याणं 'जयसोम'सेवकमुनेः श्रीपार्श्वकल्पद्रुमम् ।५। इति श्रीतिमिरीग्रामस्थपार्श्वनाथस्तवनम् ।

देवानंदा देवे फर्युं, श्रीवीर विप्रकुले जाण । गर्भे पुरुषोत्तम शक्रस्तने, न गर्भे नीच अकल्याण ।१। आषाढि सुदि छट्ठे गर्भापाने, सूरि हरिभद्रे कल्याण । अभयदेवसूरि श्रेयः फर्युं, न विप्रकुले अकल्याण ।२। न आवे आव्या गोत्र कर्मथी, श्री वीर ब्राह्मणी दूर । भरतरिया क्षत्रिकुंडे प्रभु, त्रिशला राणीनी कूख ।३। ते आसोज वदि तेरसे, मान्युं त्रिशलाए कल्याण । फल वीरे विप्र नीच

१ ०१-वि(रतः उ)त्रं-सुभं मा(नं)-मतं । २ सुष्टु भदन्तं-पूज्यं । ३ सवीता संयमधूर्ये(न त) । ४ मनोहरं । ५ दित-छिन्नः आशु क्षिप्र प्रकर्षेण भवः-संसारो येन । ६ गरणस्थानां । ०न(?)षऽपतमसाने । ७ अतिशयेन कारणं । ८ देवं । ९ पण्डितं । १० शीलनतं । ११ वि-विशेषेण (चित्र-अद्भुतं, परमं (प्रधानं) । १२ पराणि प्रकृष्टानि यानि मङ्गलानि तेषामीशः । १३ सूर्य । १४ बृहस्पति । १५ प्रवालकं । १६ हरिवराशनः-सिंहासनस्तत्र स्थित ।

दुःखी, ते किम कहुं अकल्याण ? ।४। इंद्रे भद्रबाहुए कहयुं ए, श्रेय कल्याण फल जे। निंद्य अकल्याणकभूत किम ?, अहो जिनचंद्र वीर ते ।८।

श्रीवीरस्तवन–नारे वीर ! नहीं मानुं रे, नहीं मानुं नहीं मानुं रे । नहीं मानुं तारुं अकल्याण, प्रभु गर्भकल्याण प्रमाण ।१। नारे वीर ! नहीं मानुं रे, किम मानुं किम मानुं रे । प्रभु ! अकल्याणकभूत, जे गर्भापहार तात !, नारे वीर !० ।२। आषाढि सुदी छट्ठी दिने रे, आव्या देवानंदा कूख रे। ते दिन गर्भाधाने कल्याण श्रेय, ए पंचाशक साख, नारे वीर !० ।३। आसोज वदी तेरस दिने रे, गर्भहरण त्रिशला कूख रे ! । इंद्रे श्रेय कल्याण माताए, मान्धुं कल्पसूत्र मूल साख, नारे वीर !० ।४। जन्म दीक्षा केवल मोक्षे पशुं रे, कल्याण श्रेय छ ए जाण रे । अकल्याण ग्रंथ सूने नहीं रे, जिनचंद्र वीर वखाण, नारे वीर !० ।५।

धुइ–कल्याण ते श्रेय रूपे मानिया ए, माता बे कूखे महावीर तो, सवे जिन जननी कूखे ए. आवयुं कल्याण तिम धार तो ॥ भाखी जिन पडिमा पूजा ए, ऋतुवंती न पूजे देव तो । जिन पूजती ऋतुवंती थाय ए, पूजे न ते प्रभाविक देव तो ॥१॥

श्रीजयसोममहोपाध्यायविरचितस्वोपज्ञवृत्तियुतं

श्रीपौषधषट्त्रिंशिकाप्रकरणं समाप्तम्